तामृषि-महर्षि-सिद्धगन्धर्व-देवादिविषयां प्रतिपत्तिमाश्रित्य श्रीकृष्णोऽर्ज्जुनाय रूपान्तरतामदर्शयत्। यस्मिन् सा रूपान्तरतादर्शि, योऽसौ तां रूपान्तरतामपश्यत्, तयोस्तत्प्रतिपत्तौ प्रगाढ़भावोदयाभावात् न तामेकोऽन्यस्मिन् प्रतिफलयितुं क्षमः। अतः सेयं रूपान्तरता केवलं मानसव्यापारघटितेति चेत्, तथापि तादृक्शक्त्युत्पादने यत्नस्य दृढ़प्रत्ययस्य च प्रयोजनमासीत्। किमियं रूपान्तरता पारमार्थिकीत्यविचार्य्य वाइबेलगीतोक्तिपर्य्यालोचनयात्रापि खीष्टस्य सविशेषः श्रीकृष्णस्य निर्व्विशेषयोग आसीदित्यवगम्यते। यद्येकस्य जीवनालेख्यादन्यस्य जीवनमालिखितं स्यान्न जातु सर्व्वोभयोर्विशेषभावसमुच्चितक्रिया समभावेन दृश्येत।

ये पुनर्गीतायां बौद्धधर्म्मं खीष्टधर्म्मञ्च लक्षयन्ते, अवश्यमेव ते किमपि किमपि सौसादृश्यं समालोक्य तथा न्यरूपयन्। निपुणपर्य्यालोचनया यदपि नेदं सौसादृश्यं गीताया बौद्धधर्म्मात् खीष्टधर्म्माच्चोत्पत्तिं प्रतिपादयति, तथाप्यस्य सौसादृश्यस्यासम्भावना स्याच्चेन्न गीतायां बौद्धधर्म्मस्य खीष्टधर्म्मस्य च मूलं वर्त्तेत। बौद्धानां निवृत्तियोगस्य खीष्टस्य च प्रवृत्तियोगस्य मूलं गीतायामस्तीत्यनायासेन परिलक्ष्यते। प्रकृतेः सर्व्वाभ्यः क्रियाभ्यः स्वात्मानं पृथक्कृत्य साधनं निवृत्तियोगस्य मूलम्, स्फुटमेवेदमस्ति गीतायाम्। साधनमेतदस्तीति बौद्धधर्म्माद्गृहीतमेतदिति न वक्तुं शक्यते। इन्द्रियसम्पृक्तविषयोपरि जयलाभाय स्वभावत एव तत्साधनं साधकैरवलम्ब्यते। यदा हि बौद्धधर्म्मो निवृत्तियोगमात्रेण पर्य्यवसन्नः तदेतत् साधनं तस्मिन् विपुलायमानं सुव्यक्तं दृश्येतेति नाश्चर्य्यम्। चेदिदं गीतायामङ्कुरायमानं निरतिशयसङ्क्षिप्ताकारेण लक्ष्यते, अथ गीता पश्चाद्बौद्धधर्म्मोऽभ्युदेदित्यस्य तत् प्रमाणम्। खीष्टधर्म्मस्य प्रवृत्तियोगमाश्रित्यैतदेव वक्तुं शक्यम्। सङ्गफलत्यागेन परमात्मनि कर्म्मसमर्पणमस्येतस्तत्प्रेरणाय। कर्म्मकरणं प्रवृत्तियोगस्य मूलम्। खीष्टधर्म्मेऽस्य यथा परिस्फुटत्वं लक्ष्यते न तथा गीतायाम्। प्रमाणमेतद्यत् गीताप्रचारसमये नासीदुपयुक्तकालस्तस्य

परिस्फुटाकारधारणाय ; पश्चात् यथासमयं खृष्टधर्म्मोऽयं स्फुटतर आसीत्। खृष्टस्य प्रवृत्तियोग इच्छायोग इति व्याविसगमत्।

बौद्धखृष्टधर्म्माभ्यां गीतायाः सम्बन्धः कथञ्चित् पर्य्यालोचितः। सम्प्रत्यस्या भिन्न-भिन्न-व्याख्यातॄणां विवरणमवश्यमुद्दिष्टव्यम्। बृहदारण्यकमाह—"अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्व्वेदः सामवेदोऽथर्व्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्व्वाणि निश्वसितानि। ४।४।१०।" उक्त्यानया न केवलमृग्वेदादिकं देवनिश्वसितसम्भूतं किन्तर्हि व्याख्यानान्यनुव्याख्यानानि च तत्सम्भूतानि। व्याख्यानानि तद्व्याख्यानानि च चेद्देवनिश्वसितसम्भूतानि, न वयं तानि मनुष्यकृतानीति युक्त्याप्रमाणानि कर्त्तुं शक्नुमः। येस्तत् कुर्म्मः, यान् पुनः संशयिन इत्युपहसामः, तेषां विश्वासेन वयं पराजिताः *। येन यन्मन्यतां तन्मन्यतां, वयन्तु वेदोपनिषदादिषु यादृशीं, व्याख्यानानुव्याख्यानेषु च तादृशीं देवनिश्वसितक्रियां पश्यामः। न केनाप्यस्वीकर्त्तुं शक्यं यद्व्याख्यातॄणामिकैकः सत्यस्य दिशमेकां पश्यन् मन्त्रमुग्ध इव तस्या एवानु-

* The remaining cardinal fact is, that these various beliefs are parts of the constituted order of things, and not accidental, but necessary parts, seeing how one or other of them is everywhere present, is of perennial growth, and when cut down, redevelops in a form, but slightly modified, we cannot avoid the inference that they are needful accompaniments of human life, severally fitted to the societies in which they are indigenous. From the highest point of view we must recognise them as elements in that great evolution of which the beginning and end are beyond our knowledge or conception—as modes of manifestation of the Unknowable, and as having them for their warrant.—*Spencer's First Principle.*

"He like every other man, may properly consider himself as one of myriad agencies through whom works the Unknown Cause, and when the Unknown Cause produces in him a certain belief, he is thereby authorised to profess and act out that belief.—IBID.

यौत्—"तस्य ( आचार्य्यकेशवचन्द्रस्य ) आसीदभिलाषो यदयं निखिला
श्रष्टश्रशास्त्रतो नवविधानं प्रमाणोपस्थापयेत्, जगति तस्यायमभिला-
षोऽद्य श्रीकृष्णजीवनेन पूर्णोऽभवत्। न केवलं वचनप्रमाणेन किन्तर्हि
जीवनमेकं वर्षाणां चतुःसहस्रात् प्राक् समन्वयभावेनोद्दीपितं यदभा-
षयत, तदस्य महासमन्वयनिष्पादकविधानमागत्य देशकालजातिघटि-
तसमग्रव्यवधानमपाकृत्य समपादयदिति जगति 'श्रीकृष्णस्य जीवनं
धर्मश्च' घोषयिष्यति।" श्रीकृष्णजीवनधर्मनिबन्धनादर्व्वागेकादश-
वर्षेष्वतीतेषु श्रीकृष्णस्य नवविधानस्य च समन्वयभूमिः ( ईश्वरेण साक्षा-
त्सम्बन्धः* ) एकेति भवेत् प्रमाणितम्, नासीदविज्ञातमेतद्ब्रह्मर्षितः।
गीतासमन्वयभाष्यनिबन्धनेन यदभवत् साविष्कृता, तेनायमात्मानं
कृतार्थं मन्यते।

'श्रीकृष्णस्य जीवनं धर्मश्च' यत् तेन व्यलेखि सम्यक् तत्। कथ-
मसौ पुनर्गीतासमन्वयभाष्यनिबन्धनेन समयक्षेपमकरोत्? किन्तेन
वासीत् प्रयोजनम्? एषु विषयेषु समयपरिश्रमव्ययेन किन्तु स स्वजी-
वनाधिकृतकार्य्याद् दूरात् सुदूरमपसरति। ये पुनरेवं मन्यन्ते, किन्तस्य
जीवनाधिकृतकार्य्यमवधारयन्तु तदाचार्य्यकेशवचन्द्रस्य मुखप्रोषितवच-
नैरेतैः—"ज्ञानमार्जितात्मना भक्तिके पुनरहङ्कारसागरे जीवनतरीं न्यम-
ज्जयत्। त्वमनयोः ( योगशिक्षार्थिभक्तिशिक्षार्थिनोः ) ज्ञानमल-
भथाः। भक्तिभावो योगभावश्चात्मयोर्ज्ञानं त्वं लप्स्यसे। विनयेन
विनम्रभावेन च न दूरतभावेन निखिलविषयास्त्वया ज्ञातव्याः। भक्ति-
काण्डं योगकाण्डं कर्म्मकाण्डं निखिलान्येतानि त्वयावगन्तव्यानि।
धर्म्मजीवनघटितसमस्यानुष्ठानविन्दुस्त्वं संरक्तोऽभवः। यावन्तो ज्ञात-
व्यविषयास्त्वया ज्ञातव्याः। पुरुषाणां नारीणां मध्याभिनां संसारिणां
बालानां वृद्धानां तत्सदृशिता विधयस्त्वयाऽवश्यमवगन्तव्याः। ज्ञानानामेषां
फलानि येन च स्वात्मजीवने भवन्ति प्रतिफलितानि तदर्थं विशेषेण
यतेथाः। स पुनर्ज्ञानं हृदयं मरुभूमित्वेन परिणामयतीत्यस्य दृष्टान्तं
दर्शयिष्यामि। किं वा मज्जनं सम्भ्रमाणं किं वा मजत दर्शनमात्रं

दर्शय मत्। प्रदर्शनेनास्य मव चान्येषाञ्च जन्मानि भविष्यति।"
व्रनान्ते यदवददाचार्य्यकेशवचन्द्रस्तं प्रति तदेतत्—"ज्ञानपरायण, गभी-
रतमगंभीरे प्रवेष्टव्यं त्वया। यत्र च चतुर्णां वेदानामैक्यमभवत्, तस्मिन्
मीमांसास्थले गन्तव्यं त्वया। येषु शास्त्रेषु नास्तैक्यं तान्यपरा विद्या,
सेयं परा विद्या यत्र नास्त्यनैक्यम्।"

आचार्य्यकेशवचन्द्रो गभीराध्यात्मदृष्ट्या चतुर्णां वेदानामैक्यस्थानमप-
श्यत्। समग्रवेदवेदान्तपुराणादिपर्य्यालोचनया तत्तच्छास्त्राणामैक्यप्रद-
र्शनं न तस्यामीष्टजीवनाभिज्ञतं कार्य्यम्। तादृशा श्रमेण जीवनक्षयाय
नागमत् सः। अतो विशेषविशेषवस्तुभिस्तत्कार्य्यं साध्यं तेन्याभीत् तद-
भिप्रायः। ब्रह्मरुयशास्त्रसमूहानामैक्यप्रदर्शनमुद्दामयितुर्विशेषभावः।
वेदादारभ्यापुराणमेका पारमेश्वरी चिच्छक्तिर्जीवस्य चरणसामर्थ्यं दिनं
दिनमुन्नमय्य तत्तद्विधानाप्रकाशमकरोत्, अतोऽस्ति तस्मिन् पूर्व्वा-
परसामञ्जस्यम्। गीताभाषामिदं तदेव व्यक्तीकरिष्यति। उद्भास-
यितावश्यमुद्दीरयितव्यमेतद्यो वेत् स नवविधानस्य नवीनभगवदालोकं
लब्ध्वेन वेदवेदान्तादिभिर्गीताया निगूढमैक्यमालोक्य न सोऽस्मिन् सिद्धान्ते
समुपनिष्ठन यो ऽसौ वेदान् वेदान्तानृषिहृदयेभ्याविरकरोत, सोऽयं
योगाचार्य्यहृदये सर्व्वेषामसामञ्जस्यं निष्पादितवानिति। इदमपि विशिष्ट-
तया वक्तव्यं यत् यदपि ब्रह्मरुयशास्त्रसमूहानामैक्यप्रदर्शनमनेनोद्भास-
यितुर्विशेषभारस्तथाप्यन्येषां धर्म्माणामैकतामैक्यस्थानञ्चाविष्कर्त्तुं न स
आनन्दासीनो भवितुमर्हति, यतस्तद्वियोगलिप्सौ सर्व्वेषां शास्त्राणा-
मैक्यप्रदर्शनाय स आदिष्टः। एतत्कार्य्यसाधनाय परिश्रमं न स
परिश्रमं मन्यते, प्रत्युतास्मिन् श्रमासामर्थ्ये जीवनं विफलेन गत-
मिति स मन्यते। न जातु विधानस्थाः सर्व्वे सर्व्वविधानि
कार्य्याणि कुर्य्युरिति व्यवस्था। विधानस्य राज्यमतीव विस्तृतम्।
अस्मिन्नेकैकस्य कार्य्यं स्वयं भगवान् विभज्य दत्तवान्। एकस्य
कार्य्यमपरेण साध्येत, नास्त्यत्र तत्सम्भावना। योऽस्मादेवं यतेत
स खलु विफलमनोरथः स्यात्। स्वे स्वेऽधिकारे तिष्ठता कार्य्यं कर्त्त

सर्व्वेषां तत्तत्कार्य्यैक्यात् पूर्णभावेनाविर्भविष्यति विधानं जगत्सन्निधाविति विधातुर्व्यवस्था। शम्।

उद्भावयिता।

# श्रीमद्भगवद्गीता

## समन्वयभाष्यान्विता।

---

### प्रथमोऽध्यायः।

योगयुक्तो हि येनासौ प्रोक्तवान् योगमुत्तमम्।
सर्व्वसमन्वयकरं तं वन्दे ह्यृषिसत्तमम्॥

धृतराष्ट्र उवाच—

**धर्म्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः।**
**मामकाः पाण्डवाश्चैव किमकुर्व्वत सञ्जय॥ १॥**

इह खलु—"पितामहनियोगाद्वै यो योगान्नामधारयत्। यः स नारायणो नाम देवदेवः सनातनः। तस्यांशो वासुदेवस्तु कर्म्मणोऽन्ते विवेश ह।" (स्व, प, ५ अ, २३ श्लो) इति स्मरणात् योगधर्म्मप्रवर्त्तनाय ऋषिनारायणभावावतीर्णः वसुदेवतनयः, "योगाचार्य्यो रोदसी व्याप्य लक्ष्म्या स्थानं प्राप स्वम्" (मौ, प, ४अ, २९श्लो) इति स्मरणात् योगाचार्य्यः श्रीकृष्णो ब्रह्मणः पदवेदने सुपर्य्याप्तं धर्म्मं स्वयं योगयुक्तः प्रपन्नाय शिष्याय ऋषिनरस्थानीयायार्ज्जुनायोपदिदेश। स च पुनः संग्रामे निविष्टचेतास्तं विस्मृतवानिति तेन महताप्रियेण व्यथितहृदयस्तमेवमन्वगोचोदाचार्य्यः (अ,गी, १६अ, ८—१२ श्लो);—

"श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम्
धर्म्मं स्वरूपिणं पार्थ सर्व्वलोकांश्च शाश्वतान्॥
अबुद्ध्या नाग्रहीर्यस्त्वं तन्मे सुमहदप्रियम्।
न च साद्य पुनर्भूयः स्मृतिर्मे संभविष्यति॥

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्व्वे युद्धविशारदाः ॥ ९ ॥
अपर्य्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्य्याप्तन्त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥
अयनेषु च सर्व्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व्व एव हि ॥ ११ ॥
तस्य सञ्जनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥
ततः शङ्खाश्च भेर्य्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥
पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्म्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्त्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोष-मणिपुष्पकौ ॥ १६ ॥
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥
द्रुपदो द्रौपदेयाश्च सर्व्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान् दध्मुः पृथक् पृथक् ॥१८
स घोषो धार्त्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीञ्चैव तुमुलोऽभ्यनुनादयन् ॥ १९ ॥

अथ व्यवस्थितान् दृष्ट्वा धार्त्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २० ॥
हृषीकेशं तदा वाक्यमिदमाह महीपते ।

अर्जुन उवाच—

सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥
यावदेतान् निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥ २२ ॥
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥

सञ्जय उवाच—

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥
भीष्मद्रोणप्रमुखतः सर्व्वेषाञ्च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥ २५ ॥
तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्य्यान्मातुलान् भ्रातॄन्पुत्रान्पौत्रान् सखींस्तथा ।
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥ २६ ॥
तान् समीक्ष्य स कौन्तेयः सर्व्वान् बन्धूनवस्थितान् ।
कृपया परयाविष्टो विषीदन्निदमब्रवीत् ॥ २७ ॥

अर्जुन उवाच—

दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान् ।
सीदन्ति मम गात्राणि मुखञ्च परिशुष्यति ॥ २८ ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ॥२९॥

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ॥३०॥
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥३१
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥३२
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।
आचार्य्याः पितरः पुत्त्रास्तथैव च पितामहाः ॥ ३३ ।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।
एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥३४॥
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ।
निहत्य धार्त्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्द्दन ।।५३
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्त्तराष्ट्रान् सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥३६॥
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३७ ॥
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्द्दन ॥ ३८ ।
कुलक्षये प्रणश्यन्ति कुलधर्म्माः सनातनाः ।
धर्म्मे नष्टे कुलं कृत्स्नमधर्म्मोऽभिभवत्युत ॥ ३९ ॥
अधर्म्माभिभवात् कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ४० ॥

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४१ ॥
दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्म्माः कुलधर्म्माश्च शाश्वताः ॥४२॥
उत्सन्नकुलधर्म्माणां मनुष्याणां जनार्द्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ४३ ॥
अहोबत महत्पापं कर्त्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४४ ॥
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४५ ॥

सञ्जय उवाच—

एवमुक्त्वार्ज्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ४६ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्ज्जुनसंवादेऽर्ज्जुनविषादो नाम प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

सञ्जय उवाच—

तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥

श्रीभगवानुवाच—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्य्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्ज्जुन ॥ २ ॥
क्लैव्यं मास्म गमः पार्थ नैतत् त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥

अर्ज्जुन उवाच—

कथं भीष्ममहं संख्ये द्रोणञ्च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्ष्यमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्त्तराष्ट्राः ॥ ६ ॥
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्म्मसंमूढचेताः ।

यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७ ॥
नहि प्रपश्यामि ममापनुद्याद्-
यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥

सञ्जय उवाच—

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

श्रीभगवानुवाच—

अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥

"दृष्ट्वा तु पाण्डवानीकम्" (१।२) इत्यारभ्य "न योत्स्य इति गोविन्दमुक्त्वा तूष्णींबभूव ह" (२।९) इत्येतदन्तो ग्रन्थोऽर्जुनस्य शोकमोहयोः कारणं दर्शयति, योगोपदेशाय च श्रीमन्तं योगाचार्य्यं प्रवर्त्तयति। तत्र "कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्म्मसंमूढचेताः। यच्छ्रेयः स्यात् निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥" (२।७) इत्यनेनायं योगोपदेशः "नाश्रद्दधानाय देयम्" इति निषेधकोटिं नाधिरोहति। "तत् किं कर्म्मणि घोरे मां नियोजयसि केशव" (३।१) इति यत् स पश्चाद्वक्ष्यति, न तेन तस्याल्पश्रद्धत्वमनुमेयम्, सन्दिग्धे वस्तुनि परिप्रश्नो न श्रद्धाल्पत्वं श्रद्धाहीनत्वं वा व्यनक्ति। "व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे"

**नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्व्वे वयमतःपरम् ॥ १२ ॥**

(२।२) इति वचने सन्देहकारणं दृश्यते ; इवेन बुद्धिविमोहनश्च मोहेश्यमिति विस्पष्टम् । कर्म्मणि प्रवर्त्तयितुमना अन्यद्योगद्वयमभ्य धात् केवलं प्रपन्नस्यायोग्यत्वप्रदर्शनाय स्वमहिमख्यापनाय च न तु त्रयाणामन्वयनायेत्युक्तिरूपरिष्टात् विचारणीया ।

शोकमोहाभिभूतस्यार्ज्जुनस्योपस्थितकर्त्तव्यप्रमुख्यवारणायोवाचा- थार्थः, अशोच्यानिति । स्वधर्म्मनिरतत्वात् नित्यत्वाच्च शोचितुमयोग्यान् भीष्मादीन् अन्वशोचः अनुशोचितवानसि एवमतत्त्ववित्त्वं प्रकटयन्नपि "पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः" (१।४१) इत्यादिकान् प्रज्ञावतां वादान् वचनानि च भाषसे परं न तु बुध्यसे इति भावः । पण्डितास्तत्त्वविदो विवेकिनः गतासून् मृतान् अगतासून् जीवतश्च नानुशोचन्ति, स्वाभाविकत्वादपरिहार्यत्वादात्मनोऽमरणधर्म्मत्वाच्च ।

कुतस्तेऽशोच्या इत्यपेक्षयाह न त्वेवाहमिति । न त्वेव जातु कदाचिदहं नासम्, किन्त्वासमेव, न त्वं नासीः किन्त्वासीरेव, तथा नेमे जनाधिपाः नासन् किन्त्वासन्नेव अत्र जगज्जीवयोर्मिथ्यात्ववादस्य नावकाशः द्वैतवादिनो विशिष्टाद्वैतवादिनश्च जगज्जीवमिथ्यात्व- वादिभिर्विप्रवदन्तः सद्युक्तिजालविस्तारे सुमहत्कौशलमाविष्कुर्व्वन्तु, वयन्तु यस्योक्तिरियं गीता प्रधानतस्तदुक्त्यनुसरणेन तस्या व्याख्याने कृतमनोरथाः । अतः "ब्रह्म सत्यं तपः सत्यं सत्यञ्चैव प्रजापतिः । सत्याद्भूतानि जातानि सत्यं भूतमयं जगत् ॥" (म, शां, २५म, २४।२५श्लो) इति तस्य व्यक्ततरजगज्जीवसत्यत्वस्वीकारमनभिनन्द्य तदसद्वादस्थापने नास्माकं प्रवृत्तिरस्ति तन्त्रान्तरेषु महता प्रयत्नेनो- द्दीपितस्यासत्कार्य्यवादस्य मिथ्यात्वसत्यत्ववादस्य च तदा का गतिरिति चेत् योगभक्त्योर्वस्तुदर्शनरीत्या स समाधेयः । अत्र शास्त्रे सद्वादं स्वीकृत्यैव रीतिद्वयमुक्तं समन्वितञ्च, तत्तु पश्चाद्दर्शयामहे । अधुना

प्रसृतमनुसरामः । न हि निखिलवस्तुतिरोभानादृते ब्रह्मसाक्षात्कारः सम्भवतीति योगिनां प्रयत्नस्तत्तिरोभानाय । सन्मात्रे चिन्मात्रे वा पर्य्यवसानं सर्व्वस्य युक्त्या शास्त्रबलेन च सुकरमिति दृष्ट्वा तदनुसरणं तेषां सर्व्वत्र । मृत्युकाले प्रथमस्तावत् वाङ्निरोधः, वाङ्निरोधेऽपि मानसक्रियाया निदर्शनं न निरुध्यते, तन्निदर्शननिरोधानेऽपि शरीरोष्मणा प्राणस्य स्थितिरनुभवगोचरीभवति, यदा तूष्मा नापलभ्यते तदायमात्मनि विलीन इति सम्पन्नत्वेनावधार्य्यते । "अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां, स य एषोऽणिमा, ऐतदात्म्यमिदं सर्व्वं, तत् सत्यं स आत्मा" (छा, उ, ६।६।७।८) इत्युपनिषदुक्तरीत्या योगिनामात्मव्यतिरिक्तपदार्थानां विलये प्रयत्नः । पराशरेणापि युक्त्यन्तरेणायमेव साधितः, तद्यथा (वि, पु, २अं, १२अ, ४१—४४श्लो) ;—

"मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः ।
जनैः स्वकर्म्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु ॥
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित् क्वचित् कदाचित् द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्म्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एषो भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत् संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥" इति

"सन्मूलाः सोम्येमाः सर्व्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छा, उ, ६।४।८) इति चिरन्तनश्रुतान्तानुयायी श्रीमतो योगाचार्य्यस्य "सत्यं भूतमयं जगत्" इति सिद्धान्तः सर्व्वथा पूर्व्वैरविरुद्धः । भगवल्लीलादर्शनादृते न जातु भक्तिः पुष्णात्यतो भक्तिपथाश्रयिणः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् (छा, उ, ६।२।२) इत्यस्याः श्रुतेरिममर्थं प्रतिपादयन्ति—"'इदं' विभक्तनामरूपबहुत्वावस्थं जगत् 'अग्र' सृष्टेः प्राक् 'एकमेव' अविभक्तनामरूपकतयैकत्वावस्थापन्नमिव

देहिनोऽस्मिन् यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

'अद्वितीयम्' अधिष्ठानान्तरशून्यञ्च 'सदेव आसीत्'।" (वे, त, मा,) इति "अव्यक्ताद्व्यक्तयः सर्व्वाः प्रभवन्त्यहरागमे" (८।१८) इत्युक्तदिशा सतोऽभिव्यक्तं जगत् जीवश्च तल्लीलाभूमिर्विभूतिर्वा; योगप्रलये तु तयोः सद्भावतयावस्थानम्; तत्तु "रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके" (८।१८) इत्युक्तदिशा। अतएव मूलेऽनाधारे सद्भावे दृष्टि-र्योगिनाम्, भक्तानान्तु भक्तभगवदवलम्बकानां सन्मूलासु सर्व्वासु प्रजासु तदन्तर्यामितया कल्याणगुणसम्पन्ने परमात्मनि चेत्यलमति विस्तरेण। १२।

आत्मतत्त्वविज्ञानाय प्रथमन्तावत् देहदेहिनोर्भेदं देहनाशेऽप्यात्मनोऽविनाशञ्च प्रत्यक्षदृष्टान्तेन दर्शयति देहिन इति। देहिनोऽस्मिन् देहे यथा कौमारं यौवनं जरेति तिस्रोऽवस्थाः, तथा देहान्तरप्राप्ति-र्मृत्योरनन्तरं देहाद्देहान्तराश्रयणमवस्थाविशेष एव। अतो धीरो बुद्धिमान् देहनाशात्मनो न मुह्यति। कौमाराद्यवस्थान्तरतायां यथा स एवात्मेति प्रत्यभिज्ञानं देहाद्देहान्तरप्राप्तावपि तथैव, जातमात्रस्य पूर्व्वसंस्कारजनितप्रवृत्तिदर्शनादिति प्राचां सिद्धान्तः। सिद्धान्तश्चायं नैकान्तिकः काले कालेऽस्य रूपान्तरपरिग्रहात्, [illegible]नापि सुतरां तदधीनत्वानपनयात्। श्रीमतो योगाचार्य्यस्य तु पुनः सर्व्वसमन्वयकारिणः सिद्धान्तं प्रदर्शयितुं [illegible] सिद्धान्तः। तथाहि वैदिकसंहितासु परेतानां जीवानामिह लोके पुनर्जन्म नोपलभ्यते, अथापि यद्भोगाय देहग्रहणं वर्णितमस्ति तत् परत्रैव। तद्-यथा;—

"सं गच्छस्व पितृभिः सं यमेनेष्टापूर्त्तेन परमे व्योमन्।
हित्वायावद्यं पुनरस्तमेहि सं गच्छस्व तन्वा सुवर्च्चाः॥
(१०म, १४सू, ८ऋक्) इति।

"ये नः पितुः पितरो ये पितामहा य आविविशुरुर्व्वन्तरिक्षम्।
तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वः कल्पयाति॥"

( १८।३।५९ ) इति।

एतत् कायग्रहणं पुनर्मर्त्ये[illegible] तद्यथाथर्व्वणि ;—

"मा ते मनो मासोर्माङ्गानां मा रसस्य ते।
मा ते हास्त तन्वः किञ्चनेह।" ( १८।२।२४ ) इति।

न तु वक्तव्यमस्थूलोऽयमिति ; स्थूलत्वमेवास्य सर्व्वत्र वर्ण्यते ;—

"यदो अग्निरदहदेकमङ्गं पितृलोकं गमयन् जातवेदाः।
तद्वः एतत् पुनरा प्याययामि स्वाङ्गाः स्वर्गे पितरो मादयध्वम्॥"

( १८।४।६४ ) इति।

पुत्रकलत्रैश्च तत्र पुनर्मिलनमपि वर्ण्यते ;—

"स्वर्गं लोकमभि नो नयासि सं जायया सह पुत्रैः स्याम।"

( १२।२६म। १७ ) इति।

परेतानामयज्ञयाजिनां दस्यूनामपि पितृगणैः सह वसतिः ;—

"ये दस्यवः पितृषु प्रविष्टा ज्ञातिमुखा अहुतादश्चरन्ति।
परापुरो निपुरो ये भरन्ति अग्निष्टानस्मात् प्रधमाति यज्ञात्॥"

( १८।२।२८ ) इति।

स्थितिः पितॄणामन्तरिक्षे दिवि पृथिव्यां वा ;—

"ये न पितुः पितरो ये पितामहा य आविविशुरुर्व्वन्तरिक्षम्।
य आक्षियन्ति पृथिवीमुत द्यां तेभ्यः पितृभ्यो नमसा विधेम॥"

( १८।२।४९ ) इति।

पृथिव्यां स्थितिस्तु तत्र समाहितानामतएवाह्वानमन्त्रे ;—

"ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः।
सर्व्वांस्तानग्न आ वह पितॄन् हविषे अत्तवे॥"

( १८।२।३४ ) इति।

ऋच्यथर्व्वणि च विस्पष्टं भूसमाधानम्। तद्यथा ;—

"उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥
उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचाभ्येनं भू[illegible]हि ॥
उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥"

( १०।१८।१०—१२ ऋक् ) इति ।

युवतिरित्यत्र पृथिवी, निर्ऋतेरुपस्थादित्यत्र प्रपथे पुरस्तात्, उच्छ्वञ्चस्वेत्यत्र उच्छ्रय, सूपवञ्चनेत्यत्र सूपसर्पणाः, भवन्त्वित्यत्र स्योना इति पाठान्तरैरथर्वणि ( १८।३।४९—५१ ) एताः ।

भूमेरव्यवहितोपरिस्थव्योम पृथिवीति केचित्, तथैवाथर्वणि "पृथिवीं त्वा पृथिव्याम्" ( १८।४।४८ ) इत्यत्र दर्शनात् । "पार्थिवे रजसि आ निषत्ताः" ( १०।१५।२ ) इत्यत्र रजःशब्देनान्तरिक्षावकाशेऽर्थे गृह्णाति तन्मतेनैक्यम् । न तु वक्तव्यं पृथिव्यव्यवहितान्तरिक्षे पितरो देवा वा न निवसन्तीति । यदि न स्युर्वैदिकर्षिभिः प्रथमामिष्टकामुपदधतः नाचिकेताग्निचितस्तैः सायुज्यं सलोकता न वर्ण्येत — 'अथो या अस्मिँल्लोके देवताः तासाँ सायुज्यँ सलोकतामाप्नोति' ( तै, ब्रा, ३।११।१० ) इति । "पुनरस्तमेहि" इति वचनेनेह लोक एव पुनरावृत्तिरर्चो वर्णयन्तीति मतमेतैर्भिः परास्तम् । यत्र च तादृशवर्णनमस्ति तत्तु स्वधाग्रहणाय । तद्यथा—"परा यात पितरः सोम्यासो गम्भीरैः पथिभिः पूर्याणैः । अधा मासि पुनरा यात नो गृहान् हविरत्तुं सुप्रजसः सुवीराः ॥ ( १८।४।६३ ) इति । आहेऽर्घ्यावारिषु निगूढाः पितरस्तिष्ठन्तीति शौनकः ( आ, गृ, सू, ४।७।२६ ) ।

अथ पुनर्ब्राह्मणविभागे देहस्थ क्षुत्तृष्णानिपीडितस्यानुष्ठानमात्रात्मात् परत्र पानभोजनैस्तन्निवृत्तिः सायं प्रातर्वा, पक्षे पक्षे वा, मासि मासि वा, मासैश्चतुर्भिश्चतुर्भिर्वा, षण्मासैः षण्मासैर्वा, प्रतिसंवत्सरं वा, शतवर्षैः शतवर्षैर्वा, यथेच्छं वा पानभोजनाभिवृत्तिः । तद्यथा ;—

"अथातो यज्ञवीर्य्याणामेव,—सायं प्रातर्ह वै अमुष्मिन् लोके अग्निहोत्रमुदश्नाति, तावतीह तस्मिन् यज्ञे कर्म्म। अर्द्धमासेऽर्द्धमासे दर्शपूर्णमासयाजी ; चतुर्षु चतुर्षु मासेषु चातुर्मास्ययाजी ; षट्सु षट्सु पशुबन्धयाजी ; संवत्सरे संवत्सरे सोमयाजी ; शते शते संवत्सरेषु अग्निचित् काममश्नाति कामं न तद् ह एतद्यावत् शतं संवत्सरास्तावदमृतमनन्तमपर्य्यन्तम्। स यो ह एतदेवं वेद एवं ह एतस्य एतदमृतमनन्तमपर्य्यन्तं भवति। तस्य यदपि दर्वीकयेवोपहन्यात्तदेवास्यानन्तमनन्तमपर्य्यन्तं भवति।" (श, प, ब्रा, १०।१।५ ४) इति।

'न कामम्' इति वचनमनन्तापर्य्यन्तस्थितिमेवाच द्योतयति। द्विविधा हि स्वर्गलोका ब्राह्मणविभागे वर्ण्यन्ते, आदित्यलोकादर्व्वाञ्च उपरितनाश्च। ये हि अर्व्वाञ्चस्तेऽन्तवन्तः क्षय्याः, ये चोपरितनास्ते अनन्ता अपारा अक्षयाः। अभिजयति तान् नाचिकेताग्निचित् तदभिज्ञश्च तद्यथा—"अवरो ह वै नामैते लोका येऽवरेणादित्यम्। अथो हैते वरीयाᳬसो लोका ये परेणादित्यम्। अन्तवन्तᳬ ह एष क्षय्यं लोकं जयति योऽवरेणादित्यम्। अथ हैषाऽनन्तमपारमक्षय्यं लोकं जयति यः परेणादित्यम्। अनन्तᳬ ह वा अपारमक्षय्यं लोकं जयति योऽग्निं नाचिकेतं चिनुते, य उतैनमेवं वेद।" (तै,ब्रा, ३।११।८) इति। अर्व्वाक्षु लोकेषु सूर्य्यालोकप्रचरणादहोरात्रे भवतोऽत आयुःक्षयस्तेषु ; न तथा परासु लोकेषु—"नास्याहोरात्रे लोकमाप्नुतः, योऽग्निं नाचिकेतं चिनुते य उतैनमेवं वेद" (तै, ब्रा, ३।११।८) इति। स्वर्गलोके यज्ञयाजिनः प्रजया पशुभिर्ब्रह्मवर्च्चसेन युक्ता भवन्ति, यथा "प्रजया पशुभिर्ब्रह्मवर्च्चसेन सुवर्गे लोके" (तै, ब्रा, १।२।१) इति। द्यावापृथिव्योर्मध्ये पितृयाणेन देवयानेन च समग्रविश्वपरिभ्रमणञ्चानुमोदितमत्र, यथा "द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्त्यानाम्। ताभ्यामिदं विश्वं भुवनᳬ समेति। अन्तरा पूर्व्वमपरञ्च केतुम्।" (१।४।२) इति। नक्षत्राणि हि देवानां गृहाः—"देव-

दृष्टा वै नक्षत्राणि" ( १।५।२।६ ) इति। "अमुष्मिन् लोके सम्भवति" ( श, प, ब्रा, ११।१।८।६ ) इति जन्म परत्वेव।

"विद्यया तदारोहन्ति यत्र कामाः परागताः" (श, ब्रा, १०।५।४) इत्युक्त्या ज्ञानभूमौ ब्राह्मणविभागस्य प्रवेशः "अन्धतमः प्रविशन्ति ये अविद्यामुपासते। ततो भूय इव तमो य उ विद्यायां रताः।" "अनन्दा नाम ते लोका अन्धेन तमसावृताः। तां ते प्रेत्याभिगच्छन्त्य-विद्वांसोऽबुधा जनाः॥" ( बृ, आ, ६।४।१०।११ ) इत्यत्र संहितोक्त-तमःप्रवेशस्य ज्ञानभूमौ नवीनविनियोगः। अथर्ववेदोक्तस्य "अथाहु-र्नारकं लोकम्" ( १२।४।३६ ) इति नरकलोकस्य तु विस्तृतविवरणेन पौराणिकसमये ग्रहणम्

येषैः साधितं स्वर्गलोके लोकान्तरे वा स्थितेः कालो न निर्णीतोऽस्ति संहितायां ब्राह्मणविभागे वा। अतस्तस्मिन्नपरितुष्यन् ब्राह्मणविभागेषु सुपरिचितो याज्ञवल्क्यो बृहदारण्यकोपनिषदि "यत् कर्म कुरुते तदभिसम्पद्यते" ( बृ, आ ६।४।४ ) इति न्यायमनुसृत्य स्वर्गे नाह "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत् किञ्चेह करोत्ययम्। तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मणे॥" ( बृ, आ, ६।४।६ ) इति। देहाद्देहान्तर-प्राप्तिमेवं स दर्शयति, "तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्य-माक्रममाक्रम्यात्मानमुपसंहरति, एवमेवायमात्मा इदं शरीरं निहत्या-विद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरति।" "तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं तनुते, एवमेवायमात्मा इदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां भूतानाम्" ( बृ, आ, ६।४।४ )। "य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्।" ( बृ, आ, ८।२।१६ ) इति इममेवार्थं छान्दोग्ये राजा जैवलिः प्रपञ्चयाह "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्

ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चाण्डालयोनिं वा।" (छा, उ, ५।७।१०) इति। "एतमन्नमयमात्मानमुपसंक्रम्य" इत्यारभ्य "एतमानन्दमयमात्मानमुपसंक्रम्य इमाँल्लोकान् कामान्नीकामरूप्यनुसञ्चरन् एतत् साम गायन्नास्ते" (तै, उ, ३।१०।५।६) इति तैत्तिरीयोपनिषदुक्तिः भक्तिप्रधानपौराणिककालमालिङ्गति। वैदिककर्म्मसु मन्त्रब्राह्मणवत् सर्व्वम्। तत्त्वनिर्णायकसूत्रप्रधानकाले तु गुणत्रयविभागतो लोकानामूर्द्ध्वमध्याधोविभागनिर्व्वचनं जरामरणादिजन्मदुःखमात्रत्वमात्मस्तित्वञ्च दृश्यते। मुक्तानां तत्र चिन्मात्रत्वेऽवस्थानं स्वेच्छया शरीरग्रहणं वा विवादास्पदमासीत्। "मनःप्रीतिकरः स्वर्गो नरकस्तद्विपर्य्ययः। नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम॥" (२अं, ६अ, ४२श्लो) इति विष्णुपुराणवचनं स्वर्गनरकयोस्तत्त्वमाविष्करोति। वसिष्ठपराशरादीनां शरणिमनस्त्वाधुनिकप्रसिद्ध व्याख्यातृभिः तनुरूपादिकं मनोभाव एव पर्य्यवसितम्। तद्यथा, "विसृज्यात्मतनुं घोरामित्युक्तो विमुमोच ह" (भाग, ३स्क २०अ, २८श्लो) इत्यस्य व्याख्यानावसरे श्रीमच्छ्रीधरस्वामिनोक्तं "सर्व्वत्र तनुत्यागो नाम तत्तद्भावपरित्यागो विवक्षितः, ग्रहणञ्च तत्तद्भावापत्तिरिति द्रष्टव्यम्।" इति। न्यायमिमं समाश्रित्य वैष्णवशास्त्रमीमांसाकृता श्रीमता जीवेनाप्युक्तं कथासन्दर्भे "तनुरूपकलेवरशब्देन श्रीभगवतो भूभारजिहीर्षालक्षणो देवादिपिपालयिषालक्षणश्च भाव एवोच्यते।" इति। "सर्व्वेषां देहहीनानां मदद्भुतं भविष्यति। लुप्यन्ते सर्व्वकर्म्माणि हीनदेहस्य वै विभो॥" इत्यत्र देहं विना न कर्म्मसिद्धिरिति रामायणे विदेहस्य वसिष्ठस्योक्ती यद्यपि दृश्यते तथापि विदेहस्य निमेस्तत्रैव चिद्रूपेण स्थितिप्रार्थनं सर्व्वभूतानां निमेषक्रियासिद्धौ तस्य क्रियाकारित्वञ्च, तद्यथा "सुप्रीतास्तु सुराः सर्व्वे निमिमेतस्तदाऽब्रुवन्। वरं वरय राजर्षे क्व ते चेतो निरूप्यताम्॥ एवमुक्तः सुरैः सर्व्वैर्निमिमेतस्तदाऽब्रवीत्। नेत्रेषु

सर्व्वभूतानां वसेयं सुरसत्तमाः॥ वाढ़मित्येव विबुधा निमिमूचुस्तदा-ब्रुवन्। नेत्रेषु सर्व्वभूतानां वायुभूतश्चरिष्यसि॥ त्वत्कृते निमिषिष्यन्ति चक्षूंषि पृथिवीपते। वायुभूतेन चरता विश्रामार्थं मुहुर्मुहुः॥" (रा, उत्त, ५७स, १३—१६श्लो) इति। "अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवचक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके।" (छा, उ, ८।५।६।१२) इति श्रुतिरपि तदेव व्यनक्ति।

एवं विविधरूपान्तरैरेकस्मिन् मीमांस्ये विषये कथं वाविष्करो-त्यात्मानं श्रीमतो योगाचार्य्यस्योक्तिषु तदयमत्र पर्य्यालोचयामः। प्रथमन्तावत् स वैदिककालमुद्दिश्याह "काङ्क्षन्तः कर्म्मणां सिद्धिं यजन्त इह देवताः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा॥"(४।१२)। "त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते। ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥ ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्म्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥" (९।२०—२१) इत्यत्र यद्भिरसया गतिरिति संहिताब्राह्मणयोः सिद्धान्तमनभिनन्द्य वेदान्तसिद्धक्रतान्तमेवाश्रयत्याचार्य्यः। "शरीरं यदवाप्नोति यच्चाप्युत्-क्रामतीश्वरः। गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्॥ श्रोत्रं चक्षुः स्पर्शनञ्च रसनं घ्राणमेव च। अधिष्ठाय मनश्चायं विषयानुप-सेवते॥" (१५।८।९) इति वैदिकसमयोचितोक्तिः। इयांस्तु विशेषो यद्देवेषु चक्षुरादीन् सूर्य्यादिषु प्रक्षिपा प्रथमं केवलं जीवस्य लोकान्तर-गमनम्, तदनन्तरं तत्र भोगोपकार्य्यविकलदेहप्राप्तिः।

वेदान्तसमुचितसिद्धान्तः पुनरेवोपलभ्यते। "विद्यामयोऽयं पुरुषो न तु कर्म्ममयः स्मृतः। य एतमसृतं नित्यमग्राह्यं शश्वदक्षयम्। वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत्॥" (म, मो, ५१ष, ३३।३४श्लो) इत्यनुगीतोक्तिर्वेदान्तसिद्धं कर्म्ममयाद्विद्यामयस्य पुरुषस्य भेदं दर्शयति। "यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।

भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्॥" (८।२५)
इति तत्तत्कामवशात् तत्तल्लोकप्राप्तिं वदन्निवेदान्तैरैक्यम्, तत्र तु विशेषः सर्व्वलोकचारित्वं विदुषः। "लोकानालोकयाम्यहम्" (१६ अ, ४० श्लो) इत्यनुगीतोक्तिः पुनः सर्व्वलोकचारित्वमाम्नायविद्या व्यनक्ति। "अन्तकालेषु मामेव स्मरन् मुक्ता कलेवरम्। यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥ यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः॥" (८।५।६ श्लो) इत्यत्र तु वेदान्तादपि स्फुटतरा तत्तद्भावभावितत्वे तत्तद्भावप्राप्तिः। "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः॥ धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्। तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्त्तते॥ शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्त्तते पुनः॥" (८।२४।२५।२६) इति वेदान्तसिद्धं प्रयाणमार्गद्वयमुक्त्वा "नैते सृती पार्थ जानन् योगी मुह्यति कश्चन। तस्मात् सर्व्वेषु कालेषु योगयुक्तो भवार्ज्जुन॥" (८।२७) इत्यत्र विदुषो योगयुक्तस्य मार्गद्वयनिरपेक्षत्वमुक्तम्, तत्त्वाचार्य्यस्य प्रतिभानमद्भुतम्। "मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः॥" (८।१५)। "अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्त्तन्ते तद्धाम परमं मम॥" (८।२१)। "न तद्भासयते सूर्य्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम॥" (१५।६) इति आम्नायविद्यामपुनरावृत्तिविषये यद्वर्णितं तद्वेदान्तसम्मतम्। निराकाराश्रयफलमिदमपुनरावृत्तिरिति विस्पष्टमनुगीतायाम्। तद्यथा;—

"सदा कदाचिन्निर्व्वेदान्निराकाराश्रितेन च।
लोकतन्त्रं परित्यक्तं दुःखार्त्तेन भृशं मया॥
लोकेऽस्मिन्ननुभूयाहमिमं मार्गमनुष्ठितः।
ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया॥

नाहं पुनरिहागन्ता लोकानालोकयाम्यहम्।
आसिद्धैर्वा प्रजासर्गादात्मनोऽपि गतिः शुभा॥
उपलब्धा द्विजश्रेष्ठ तथेयं गतिरुत्तमा।
इतः परं गमिष्यामि ततः परतरं पुनः॥
ब्रह्मणः पदमव्यक्तं मा तेऽभूदत्र संशयः।
नाहं पुनरिहागन्ता मर्त्यलोकं परन्तप॥"

(म, गी, १९अ, ३८—४२श्लो) इति

"आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्ज्जुन" (८।१६) इति सांख्य सिद्धान्तसम्मतानि सर्व्वाणि भुवनानि जरामरणादिजदुःखसामान्यात् मर्त्यलोकत्वे परिगणितानि। "एषाऽस्य परमा गतिरेषास्य परम सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः" (वृ, आ, ६।३।३२) इत्युक्तदिशा स्वरूपेऽवस्थानपूर्व्वकं परमात्मानमेव यदा न विषयीकरोति तदात्मा विषयाभिनिवेशवशादवस्थान्तरप्राप्तिरूपां पुनरावृत्तिं परिवर्त्तन शीलतां पुनः पुनः मर्त्त्यत्वानुभवति। निराकारपरब्रह्मण्याश्रिते सति तस्मिन्निवसतिर्नित्यैव।

"वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥

(२।२२)

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते॥
अथवा योगिनामेव कुले भवति धीमताम्।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्॥
तत्र तं बुद्धिसंयोगं लभते पौर्व्वदैहिकम्।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥
पूर्व्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्त्तते॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ (६।४१—४५)
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ॥" (७।१९) ।

इत्यत्र "वासांसि जीर्णानी"ति वेदसम्मतम् । योगिनां भोगप्राप्तिः योगिकुले जन्म च यद्यपि न वेदान्तेषु विस्पष्टमुपलभ्यते, भावतस्तेरस्य साम्यमस्ति । किं च ते पुण्यलोका यत्र ते योगभ्रष्टा गच्छन्तीति जिज्ञासानिवृत्तये, अनुगीतोक्तिरियमुद्धियते ;—

"ऊर्द्धन्तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः ।
कीर्त्त्यमानानि तानीह तत्त्वतः सन्निबोध मे ॥
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुध्येथाः कर्म्मनिश्चयम् ।
ताराङ्गपाणि सर्व्वाणि यच्चैतच्चन्द्रमण्डलम् ॥
यच्च विभ्राजते लोके स्वभासा सूर्य्यमण्डलम् ।
स्थानान्येतानि जानीहि जनानां पुण्यकर्म्मणाम् ॥"

(अ, गी, १७अ, ३८—४०श्लो) ।

उक्तिरियं ब्राह्मणविभागानुसारिणी । "सृष्टा भगलक्ष्म" इत्यस्य व्याख्याने "भानि अश्विन्यादीनि अन्यानि विशिष्टानि ज्योतींषि तेषां समूहयक्त"मित्युक्तत्वात् असंख्येयानि तानि ताराङ्गपाणि स्थानानि ।

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु । (१३।२१)
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥
रजसि प्रलयं गत्वा कर्म्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढ़योनिषु जायते ॥ (१४।१४।१५श्लो)
ऊर्द्धं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥" (१४।१८) ।

इत्येतद्यदुक्तं न तद्वेदे न वेदान्ते वा दृश्यते, सांख्यसूत्रे यद्यपीदं गतिकारणं व्यक्ततरं न कुत्रापि निबद्धम्, तथापि तत्सम्मतनवीनोद्भाव-

नैयमाचार्य्यस्य । अतेदं विचार्य्यम्,—न कुत्रापि केवलं स्
स्तमो वा सम्भवति, सर्व्वत्र तेषां सङ्कर एव । यदाह्वाचार्य्य:
रजस्तथा सत्त्वं गुणानेतान् प्रचक्षते । अन्योन्यमिथुनाः सर्व्वे
न्यानुजीविनः ॥ अन्योन्यापाश्रयाश्चापि तथान्योन्यानुवर्त्तिनः
न्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ॥" (अ, गी, ३६अ,
इति । अतएवाह "यदा सत्त्वे प्रवृद्धे" इति । विशेषणञ्चैत
तमसि चानुषज्यते । गुणव्यतिकरस्यापरिहार्य्यत्वादूर्द्ध्वमध्या
स्थानप्रवृत्त्यज्ञानापेक्षया । एतदेवापेक्ष्याह्वानुगीतासु, "तत्रापि
षोऽस्ति दिवि नीचोच्चमध्यमाः" (अ, गी, १७अ, ४१श्लो) इति
चेत्रमेवास्ति । दिवीत्यत्र पृथिवीप्रतियोगी दिव्शब्दः, द्यावा
सर्व्वलोकान्तर्भावकत्वेन तयोः प्रयोगदर्शनात् । अतः पर
साधारणशब्दोऽयम् । न च वक्तव्यं दिवि न कर्म्मसङ्गिनाम
यतस्तत्रैवोक्तम् "क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः" (
१८अ, ५८श्लो ) इति । भवतु तावत् राजसानां तत्रावकाशः
नान्तु न स कदापि सम्भवति । चेन्न सम्भवेत् "नीचोच्चमध्यमा
विशेषणस्य वैयर्थ्यं स्यात् । वस्तुतस्तु तत्र "न चैतदिष्टं देवानां
रूपनिवर्त्तनम्" ( अ, गी, १८अ, ५८श्लो ) इत्युक्तिर्दिविष्ठानाम
व्यनक्ति । तदेव च घनीभूतं दिवि नीचानं तामसानां प्रव
गटङ्गाति ।

"तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ॥
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥
दैवी सम्पद्विमोक्षाय निबन्धायासुरी मता ॥" ( १६।३-

इतीयमपुनर्क्तिराचार्य्यस्य प्रतिभानमुल्लासयति ।

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥

स्थिति: सुव्यक्ततरा। "लोकान् प्रत्युत्थायिनस्ते" (बृ, आ, उ, ८।२।१६) इति यदुक्तं तेनैवाभिव्यज्यते लोकानामसंख्येयत्वादावृत्तिमात्रप्रदर्शनपरमेतत्। लोकाः सप्तसंख्यातो नातिरिच्यन्त इत्युक्तिस्त्वनवधानात्, यतस्तेषां तथात्वमैतरेयब्राह्मणे (४।३।४) त्रिभिस्त्रिभिः स्तुभस्तोमैर्लोकेऽदृश्यस्यादित्यस्याधोऽधःपतनवारणायैवाम्नातम्। अतएव तत ऊर्द्धमधोऽस्मोमावकाशावगतेर्दृश्यादित्यस्य च भचक्रस्थानां मण्डलानामेकतमत्वात् लोकानामसंख्येयत्वमेव तत्त्वम्। वदति च "एवमेवानुपरिवर्त्तन्ते" (बृ, आ, उ, ८।२।१६) इति। न तु वक्तव्यं देवयानमार्गे सम्भवति समग्रविश्वभ्रमणं न तु पितृयाणमार्गे, "याभ्यामिदं विश्वमेजत् समेति" (तै, ब्रा, २।६।३) (बृ, आ, उ, ८।२।२) इत्युक्तत्वादुभयोस्तत् समानम्। आवृत्तिः पुनरावृत्तिरनुपरिवृत्तिः पुनः पुनरूर्द्ध्वमध्यमाधोगतिरेव; ज्योतिःशब्दाभिधायिनां स्वयं ज्योतिष्मतां, चान्द्रमसज्योतिःशब्दाभिधायिनाञ्च परज्योतिःसापेक्षाणां लोकानामसंख्येयत्वात्। "पृथिवीं प्राप्य" त्यत्र परज्योतिःसापेक्षकाणां पृथिवीतुल्यत्वात् पृथिवीशब्देन निर्द्देशः। अतएवाथर्व्वणि दिव्यपार्थिवभेदेन लोकानां विभागो दृश्यते यथा, "तथा लोकान् समाप्नोति ये दिव्या ये च पार्थिवाः" (८।२०प्र। १४) इति। तथाच छान्दोग्ये "स एष ये चामुष्मात् पराञ्चलोकास्तेषां चेष्टे देवकामानाम्।" "स एष ये चैतस्मादर्व्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्च" इति। अतएव "अन्तरा पूर्व्वम[illegible] केतुम्" इत्यत्र ज्योतिष्काज्योतिष्कलोकसूचनाय चिह्नवाचकः केतुशब्दः। अतएव च "अवरेणादित्यम्" "परेणादित्यम्" इति लोकानां भेदः। अतएव हि "अथो यथा रथे तिष्ठन् पक्षसी पर्य्यावर्त्तमाने प्रत्यपेक्षते, एवमहोरात्रे प्रत्यपेक्षते; नास्याहोरात्रे लोकमाप्नुतः" (तै, ब्रा, ३।११।८) इति अहोरात्रयुक्ता अहोरात्रविमुक्ता लोकाः वर्ण्यन्ते। "य एते पन्थानौ न विदुस्ते कीटाः पतङ्गाः" इत्युक्तिस्तु मार्गज्ञानानुपयोगिनां कीटादीनामत्रैव पुनः पुनर्जन्म द्योतयति, अतएव "क्षुद्रकर्म्मणान्तु जन्तूनामत्रैव पुनः पुनर्जन्मे" ति स्वामिकृतसिद्धान्तः सिद्ध्यति। "न क्वचित् सुख-

त्वन्त' न क्वचित् शाश्वती स्थितिः । स्थानाच्च शश्वतो भ्रंशो दुःख-
श्चात् पुनः पुनः ॥" ( अ, गी, १६ अ, २०श्लो ) इत्युक्तिमाचार्य्यस्था-
ाक' व्याख्यानस्य दार्ढ्यायोदाहरिष्यामः । न केवलमेतावानश्लाक'
व्र: स्यात्, इयमपि युक्तिरस्माभिर्दर्शयिष्यते—यत त्वाचार्य्येणेहशब्दः
युक्तस्तत्र मरणशीलानां मर्त्यानामाब्रह्मभुवनव्यापी लोक एव तेनाभि-
त:, तत एवोक्तं "नाहं पुनरिहागन्ता मर्त्यलोक' परन्तप" इति ।
ते तु भुक्ता स्वर्गलोकं विशाल' क्षीणे पुण्ये मर्त्यलोक' विशन्ति" इत्यत्र
विशालमिति विशेषण' मर्त्यलोकविशेषणत्वेन तदेव व्यञ्जयति । अत-
व ब्राह्मणविभागे देवयानमार्गेण पितृयाणमार्गेण च मर्त्यरूपवतां
वानां मर्त्यानाञ्च निखिलजगद्भ्रमणमुदाहृतम् । "अशुभा गतयः"
त्यारभ्य "पतन' निरये चैव यातनाश्च यमक्षये" (अ, गी, १६ अ,
१ —२६श्लो) इत्यन्तग्रन्थस्य विरोधित्वञ्च, "लिङ्ग' मनो यत्र निषक्तम्"
ति दृष्ट्या सत्यवत् प्रतीतत्वात् वस्तुर्मनोभावपरिवृत्तिविजृम्भितैर्योक्ति-
रीतिस्मृतेरेवञ्जातीयकत्वादिति हेतुना, परिहरिष्यामः । पूर्व्वतन-
ाख्यातृगणपथानुसरणेनावलम्बनमीदृग्व्याख्यानकौशलस्य कालातीत-
यदृष्ट्या सम्यक्त्वेऽपि देशकालप्रभावचिन्तया सर्व्वथा नादुष्टमिति
दृशा यद्यपि ततो बिहस्ताः, तथापीद' स्वीकर्त्तव्य' यत्—प्राचीन-
शावलम्बनेन भपञ्जरप्रयाणवशात् चक्रभ्रमिवत् परिवृत्ति' स्वीकृ-
ापि, गुणानुसारिणीं गतिं निर्णीय, सर्व्वत्र गुणव्यतिकरञ्च
दर्श्य, परत्र पुरुषाणां नीचोच्चमध्यमावस्थायां स्थितिञ्चाभिनन्द्य—
ीमद्योगाचार्य्यस्तां भूमिमारूढ़वान् यतो वेदवेदान्तयोरैक्य' पुनः
नः नीचोच्चमध्यावस्थाप्राप्तिरूपया परिवृत्तिधर्म्मवदसंख्येयलोकेष्वे-
वृत्त्या साधितं भवति । किं बहुना, "अन्ये त्वेवमजानन्तः
त्वान्येभ्य उपासते । तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरा-
णाः ॥" ( १३।२५ ) ; "मां हि पार्थ व्यपाश्रित्य येऽपि स्युः
ापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥"
९।३२ ) इति नवीनमतावतारणेनावृत्तिं पराहत्य परत्र स्थितिः

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

विषयेन्द्रियसम्बन्धे सत्यवनीति दृष्टा कर्त्तव्यानुरोधात्, हे भारत, तान् तितिक्षस्व सहस्व, न तु मृत्पाषाणादिवद्बोधशून्यो भव। निसर्गतो यदवश्यम् ततः कर्त्तव्यविमुखो भवितुं नार्हसीति भावः। "नाहं विना यदुभिर्यादवानां पुरीमिमामद्यक द्रष्टुमद्य" (मौ, प, ४ष, ८श्लो) इत्युक्तिराचार्य्यस्य यदुकुलध्वंसे मृत्पाषाणादिवद्बोधशून्यत्वाभावमात्मनो दर्शयति, "इहैव त्वं मां प्रतीक्षस्व राम यावत् स्त्रियो ज्ञातिवशाः करोमि" (मौ, प, ४ष, ६श्लो) इति तस्य बन्धुक्षयजन्यशोकापनोदनार्थं तपस्युद्यतस्यापि कर्त्तव्यपरायणत्वं न तमजहादिति सूचयति। १४।

कर्त्तव्यानुरोधेन शीतोष्णादिसहनं न केवलं तत्कालोचितं श्रेयः साधयति, तेन च जीवस्य मोक्षोपयोगितोद्भवति इत्याह यमिति;—
'समदुःखसुखं'—सुखदुःखप्राप्तौ हर्षविषादरहितम् इति श्रीमच्छङ्करः, स्वजनीयदुःखं सुखवन्मन्यमानमिति श्रीमद्रामानुजः, धर्म्मानुष्ठानस्य कष्टसाध्यत्वात् दुःखमनुषङ्गलब्धं सुखञ्च यस्य सममिति श्रीमद्बलदेवः, समाधिस्थत्वात् समदुःखसुखत्वमस्येति श्रीमन्नीलकण्ठः। "यतः प्रवृत्तिर्भूतानाम्" (१८।४६) इत्याद्युक्तरीत्या भगवदिच्छा पालनं कर्त्तव्यपरायणत्वेन तस्मिन्निबद्धचित्तस्य, ततोऽन्तःशीतलतायां सुखदुःखयोस्तत्त्वं हृदि स्फुरति, तेन च विकारराहित्यमस्य। किमिदं तत्त्वम्? दुःखच्छद्म सुखं, सुखच्छद्म दुःखमिति। दुःखं दैन्यं वर्द्धयति तेन च भगवत्प्रपन्नत्व मतएवार्त्तभक्तस्य सुकृतित्वमुक्तमाचार्य्येण, सुखञ्च प्रमादमालस्यं जनयति तेन च मार्गात् स्खलनम्। श्लोकव्याख्याधिकारविषयप्रथमषट्काभ्यन्तर्गतत्वात् तदनुसारेणास्य व्याख्याने पुनरात्मबोधादेव सुखदुःखतत्त्वस्फूर्त्तिर्मन्तव्या। ततः "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः" (२।५६) इत्युक्तदिशा दुःखेऽनवसादः सुखे चानभिभूतबुद्धित्वमस्येति तयोः समभावः। समदुःखसुखं धीरं ध्यानशीलं धर्म्मनिष्ठं

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

धिय्यमीरयति धर्मेश्विति व्युत्पत्त्या, विवेकादिसम्पन्नं यं पुरुषमेते मात्रास्पर्शा न व्यथयन्ति न चालयन्ति न सुखदुःखमूर्च्छितं कुर्व्वन्ति, सोऽमृतत्वाय मोक्षाय कल्पते योग्यो भवति। १५।

देहात्मनोर्विवेकं विना नित्यानित्यज्ञानं, तेन चानित्ये निष्ठां परित्याय नित्ये निष्ठा स्थितिर्न सम्भवतीति तमेव प्रस्तौत्याचार्य्यः नासत इति ;—असतः आगमापायिनः देहस्य तद्धर्मस्य शीतोष्णादेः भावो नित्यत्वमनाशित्वं रूपान्तरतानवाप्तिः न विद्यते, सतः आगमापायरहितस्य देहिनोऽभावो व्ययो नाशो रूपान्तरताप्राप्तिः न विद्यते। अनयोरुभयोः सदसतोरन्तो निर्णयो मर्य्यादा नियतरूपत्वं याथात्म्यं तत्त्वदर्शिभि स्तदुभयस्वभाववेदिभिर्दृष्टः। प्रथमं तावत् आत्मनः सत्त्वं, देहस्य चैकस्यापायेऽन्यदेहागमेनासत्त्वम्, तद्धर्मस्य च तद्धर्मवत्त्वमुक्तम्, अधुना तयोरेकवाक्येन संग्रहो देहात्मविवेकमारभमाणेनाचार्य्येण ; विवृतिश्च "अविनाशि तु तद्विद्धि" इति "अन्तवन्त इमे देहाः" इत्यनन्तरनिर्व्वचनेन। श्रीमच्छङ्करेण तदनुयायिव्याख्यातृभिश्च यदत्रासत्कार्य्यवादस्यावतारणा कृता सा पूर्व्वापराविचारेण ; "सत्यं भूतमयं जगत्" इत्याचार्य्यस्य सत्कार्य्यवादं प्रति नेत्रनिमीलनेन च। "परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्य्यादा" (वे, सू, १अ, १पा, २२सू, भा,) "प्रलीयमानमपि चेदं जगत् शक्त्यवशेषमेव प्रलीयते शक्तिमूलमेव च प्रभवति, इतरथाकस्मिकत्वप्रसङ्गात्" (वे, सू, १अ, ३पा, ३०सू, भा,) "यदि वयं स्वतन्त्रां काञ्चित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसञ्जयेम तदा प्रधानकारणवादम्। परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा। सा चावश्यमभ्युपगन्तव्या, अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः"

अविनाशि तु तद्विद्धि येन सर्व्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित् कर्त्तुमर्हति ॥१७॥

(वे, सू, १अ, ४पा, ३सू, भा)" "कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यम्" (वे, सू, २अ, १पा, १८सू, भा) "यथा चोच्छ्वासप्रश्वासादयोऽनभिसन्धाय वाह्यं किञ्चित् प्रयोजनान्तरं स्वभावादेव भवन्ति, एवमीश्वरस्याप्यनपेक्ष्य किञ्चित्प्रयोजनान्तरं स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति" ( वे, सू, २अ, १पा, ३३सू, भा ) इत्याद्यासु तदुक्तिषु असत्कार्य्यवादस्य तुच्छत्वं, योगानुकूल्याय तत्स्थापने तस्य प्रयत्न इति तत्त्वम् । अन्यथा कथं तेनैयं युक्तिराश्रीयते "यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति, एवं कार्य्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति" ( वे, सू, २अ, १पा, १६सू, भा), "न ह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्य्यस्यासत्त्वव्यपदेशः, किन्तर्हि व्याकृतनामरूपत्वाद्धर्म्मादव्याकृतनामरूपत्वं धर्म्मान्तरम् ; तेन धर्म्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्य्यस्य कारणरूपेणानन्यस्य," "नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम् । अतः प्राक् नामरूपव्याकरणादसदिवासीत् इत्युपचर्य्यते" (वे, सू, २अ, १पा, १७सू, भा) इति । "अत्र तु असत्कार्य्यवादस्यासङ्गतत्वान्न तत्परोऽयं श्लोकः । देहात्मस्वभावज्ञानमोहितस्य तन्मोहशान्तये ह्युभयो⋯शित्वानाशित्वरूपस्वभावविवेक एव वक्तव्यः । स एव 'गतासूनगतासूंश्च नानुशोचन्ति' इति प्रस्तुतः । स एव 'अविनाशि तु तद्विद्धि', 'अन्तवन्त इमे देहाः' इत्यनन्तरमुपपादित इति । अतो यथोक्त एवार्थः" इति श्रीमद्रामानुजः । "यत्तु असत्कार्य्यवादस्थापनायैतत् पद्यमित्याहुस्तन्निरवधानम् । देहात्मस्वभावानभिज्ञानमोहितं प्रति तन्मोहनिवृत्तये तत्स्वभावज्ञापनस्य प्रकृतत्वात्" इति श्रीमद्बल देवः । १६ ।

प्रथमन्तावज्जीवात्मनः स्वभावं विशदयत्यविनाशीति ;—विनाशी-

ऽदर्शनमभाव इति श्रीमच्छङ्करः, विनाशो देशतः कालतो वस्तुतो वा परिच्छेद इति श्रीमन्मधुसूदनः, पूर्व्वावस्थापरित्यागो विनाश इति श्रीमन्नीलकण्ठः। तत् तद्वस्तु जीवतत्त्वन्तु अविनाशि नित्यविद्यमानमपरिच्छिन्नं सदैकरूपं विद्धि जानीहि ; येन चेतनेन जीवतत्त्वेन सर्व्वमिदमचेतनतत्त्वं जगत् व्याप्तम्। सिद्धमिदं व्याख्यानं "ययेदं धार्य्यते जगत्" इत्युक्त्या। चेतनाचेतनतत्त्वद्वयमधिकृत्यैवेदमप्योक्तं यथान्यत्र, "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥" (१३।३३) इति। न व्येति उपचयापचयौ न याति नापक्षीयते इत्यव्ययम्। अस्य अव्ययस्य विनाशमदर्शनमवस्थान्तरप्राप्तिं न कश्चित् कर्त्तुमर्हति। येन च यद्व्याप्तं न तत्तद्विनाशशक्तमिति "विनाशं न कश्चित् कर्त्तुमर्हति" इत्युक्तम्। निरवयवस्य चेतनस्य जीवतत्त्वस्य व्यापकत्वादविश्लेष्यत्वाच्च व्याप्येन स्थूलेनाचिता न जातु विनाशो रूपान्तरता वा।

ब्रह्मव्यतिरिक्तं न किञ्चित् सद्भवितुमर्हतीति पूर्व्वश्लोके सद्ब्रह्मेति निर्णीय तच्छब्देन सद्ब्रह्मैव परामृशन्ति श्रीमच्छङ्करस्तदनुयायिनश्च। श्रीमद्विश्वनाथस्तु प्रथमं जीवतत्त्वमेवात्र गृहीत्वा श्रीमद्बलदेवेनैकतया "येन सर्व्वमिदं शरीरं ततं व्याप्तम्" इति व्याचष्टे। तदनन्तरं "देही जीवात्मा परमात्मा इत्येतद्वस्तुत्रिकं मनुष्यतिर्य्यगादिषु सर्व्वत्र दृश्यते" इति हेतोः पक्षान्तरे तेनोक्तं "नासतो विद्यते भावः" इत्यत्र देहजीवयोरस्मिंस्तु परमात्मवस्तुनस्तत्त्वमिति। "येन सर्व्वमिदं ततम्" इत्यस्य "सर्व्वमिदं शरीरम्" इति व्याख्यानेऽपि कथन्तज्जीवतत्त्वस्य सर्व्वशरीरव्यापित्वं सम्भवति, "एषोऽणुरात्मा," (मु, उ, ३।१।९), "बालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः" (श्वे, उ, ५।९), "आराग्रमात्रो ह्यवरोऽपि दृष्टः" (श्वे, उ, ५।८), इति तस्य परमाणुपरिमाणत्वश्रवणादिति चेत्, सिद्ध्यति तत् धर्म्मभूतज्ञानेन। अतएवाहाचार्य्यः "यथा प्रकाशयत्येकः" इत्यादि। चिद्वस्तुनो निरतिशयसूक्ष्मत्वात् तत्प्रदर्शनायाणत्वादिविशेषणमिति तत्त्वम्, अन्यथा

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

विषयेन्द्रियसम्बन्धे सम्भवतीति दृष्ट्वा कर्त्तव्यानुरोधात्, हे भारत, तान् तितिक्षस्व सहस्व, न तु मृत्पाषाणादिवद्बोधशून्यो भव। निसर्गतो यद्‌व्यवस्थितं ततः कर्त्तव्यविमुखो भवितुं नार्हसीति भावः। "नाहं विना यदुभिर्यादवानां पुरीमिमामशकं द्रष्टुमद्य" (मौ, प, ४अ, ८श्लो) इत्युक्तिराचार्य्यस्य यदुकुलध्वंसे मृत्पाषाणादिवद्बोधशून्यत्वाभावमात्मनो दर्शयति, "इहैव त्वं मां प्रतीक्षस्व राम यावत् स्त्रियो ज्ञातिवशाः करोमि" (मौ, प, ४अ, ६श्लो) इति तस्य बन्धुक्षयजन्यशोकापनोदनार्थं तपस्युद्यतस्यापि कर्त्तव्यपरायणत्वं न तमजहादिति सूचयति। १४।

कर्त्तव्यानुरोधेन शीतोष्णादिसहनं न केवलं तत्कालोचितं श्रेयः साधयति, तेन च जीवस्य मोक्षोपयोगितोद्भवति इत्याह यमिति;— 'समदुःखसुखं'—सुखदुःखप्राप्तौ हर्षविषादरहितम् इति श्रीमच्छङ्करः, स्ववर्जनीयदुःखं सुखवन्मन्यमानमिति श्रीमद्रामानुजः, धर्म्मानुष्ठानस्य कष्टसाध्यत्वात् दुःखमनुषङ्गलब्धं सुखञ्च यस्य सममिति श्रीमद्बलदेवः, समाधिस्थत्वात् समदुःखसुखत्वमस्येति श्रीमन्नीलकण्ठः। "यतः प्रवृत्तिर्भूतानाम्" (१८।४६) इत्याद्युक्तरीत्या भगवदिच्छा पालनरूपकर्त्तव्यपरायणत्वेन तस्मिन्निबद्धचित्तमस्य, ततोऽन्तःशीतलतायां सुखदुःखयोस्तत्त्वं हृदि स्फुरति, तेन च विकाररााहित्यमस्य। किमिदं तत्त्वम्? दुःखच्छद्म सुखं, सुखच्छद्म दुःखमिति। दुःखं दैन्यं वर्द्धयति तेन च भगवत्प्रपन्नत्व मतएवार्त्तभक्तस्य सुकृतित्वमुक्तमाचार्य्येण, सुखञ्च प्रमादमालस्यं जनयति तेन च मार्गात् स्खलनम्। श्लोकस्यास्यात्माधिकारविषयप्रथमषट्कान्तर्गतत्वात् तदनुसारेणास्य व्याख्याने पुनरात्मबोधादेव सुखदुःखतत्त्वस्फूर्त्तिर्मन्तव्या। ततः "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः" (२।५६) इत्युक्तदिशा दुःखेऽनवसादः सुखे चानभिभूतबुद्धित्वमस्येति तयोः समभावः। समदुःखसुखं धीरं ध्यानशीलं धर्म्मनि

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥**

भियमीरयति धर्म्मस्थिति व्युत्पत्त्या, विवेकादिसम्पन्नं यं पुरुषमेते मात्रास्पर्शा न व्यथयन्ति न चालयन्ति न सुखदुःखमूर्च्छितं कुर्व्वन्ति, सोऽमृतत्वाय मोक्षाय कल्पते योग्यो भवति। १५।

देहात्मनोर्विवेकं विना नित्यानित्यज्ञानं, तेन चानित्ये निष्ठां परिहाय नित्ये निश्चला स्थितिर्न्न सम्भवतीति तमेव प्रस्तौत्याचार्य्यः नासत इति ;—असतः आगमापायिनः देहस्य तद्धर्म्मस्य शीतोष्णादेः भावो नित्यत्वमनाशित्वं रूपान्तरतानवाप्तिः न विद्यते, सतः आगमापायरहितस्य देहिनोऽभावो व्ययो नाशो रूपान्तरताप्राप्तिः न विद्यते। अनयोरुभयोः सदसतोरन्तो निर्णयो मर्य्यादा नियतरूपत्वं याथात्म्यं तत्त्वदर्शिभि स्तदुभयस्वभाववेदिभिर्दृष्टः। प्रथमं तावत् आत्मनः सत्त्वं, देहस्य चैकस्यापायेऽन्यदेहागमेनासत्त्वम्, तद्धर्म्मस्य च तद्धर्म्मवत्त्वमुक्तम्, अधुना तयोरेकवाक्येन संग्रहो देहात्मविवेकमारभमाणेनाचार्य्येण ; विवृतिश्च "अविनाशि तु तद्विद्धि" इति "अन्तवन्त इमे देहाः" इत्यनन्तरनिर्व्वचनेन। श्रीमच्छङ्करेण तदनुयायिव्याख्यातृभिश्च यदसत्कार्य्यवादस्यावतारणा कृता सा पूर्व्वापराविचारेण ; "सत्यं भूतमयं जगत्" इत्याचार्य्यस्य सत्कार्य्यवादं प्रति नेत्रनिमीलनेन च। "परस्माद्धि ब्रह्मणो भूतानामुत्पत्तिरिति वेदान्तेषु मर्य्यादा" (वे, सू, १अ, १पा, २२सू, भा,) "प्रलीयमानमपि चेदं जगत् शक्त्यवशेषमेव प्रलीयते शक्तिमूलमेव च प्रभवति, इतरथाकस्मिकत्वप्रसङ्गात्" (वे, सू, १अ, ३पा, ३०सू, भा,) "यदि वयं स्वतन्त्रां काञ्चित् प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसञ्जयेम तदा प्रधानकारणवादम्। परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतन्त्रा। सा चावश्यमभ्युपगन्तव्या, अर्थवती हि सा। न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति, शक्तिरहितस्य तस्य प्रवृत्त्यनुपपत्तेः"

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥२२॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

विनाशिनमिति । एनमात्मानमजमविनाशिनमव्ययं यो नित्यं वेद, स पुरुषः, हे पार्थ, कं कथं हन्ति, कं कथं घातयति । किमाक्षेपे, न कमपि कमपीत्यर्थः । अत्र श्रीमच्छङ्करस्तदनुयायिनश्च हन्तेस्त्वा-क्षेपमुदाहरणत्वेन गृहीत्वा विदुषः सर्व्वकर्म्मप्रतिषेध एव प्रकरणार्थ इति वर्णयन्ति । "हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते" (१८।१७) इत्यत्र हननक्रियामुदाहरणत्वेन गृहीत्वा कर्म्मानुष्ठायाप्यन-हङ्कृतत्वात् कर्म्माकरणं, न तेन बन्धनमित्याचार्य्यः स्वयं दर्शयति । तदेवाखाव्यत्र च गीतासिद्धमित्यग्रे व्यक्तीभविष्यति । २१ ।

अवश्यत्याज्येन देहेन किमिव सम्बन्धो देहिन इत्यपेक्षयाह वासां-सीति । जीर्णानि वासांसि विहाय नरो यथा अपराणि नवानि वासांसि गृह्णाति, तथा जीर्णानि शरीराणि विहाय देही अन्यानि नवानि शरीराणि संयाति । किमत्र तत्त्वं तद्विचारितं त्रयोदशश्लोके । २२ ।

देहनाशे कथं नात्मनो विनाश इत्यपेक्षयाह नैनमिति । छेदन-दहनक्लेदनशोषणानि सावयवशरीरगतानि, न तु तानि निरवयव आत्मनि सम्भवन्तीति विवृणोति,—एनं देहिनं शस्त्राणि न छिन्दन्ति अवयवविभागेन द्विधा चतुर्धा सप्तधा शतधा वा कर्त्तुं न शक्नुवन्ति, नैनं पावकोऽग्निः दहति भस्मीकर्त्तुं न शक्नोति ; न चैनमापः क्लेद-यन्ति आर्द्रीभावकरणेन विश्लिष्टावयवं कर्त्तुं न शक्नुवन्ति ; मारुतो वायुः नैनं शोषयति नीरसं कर्त्तुं न शक्नोति । २३ ।

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।**
**नित्यः सर्व्वगतः स्थाणुरचलोऽयं सनातनः ।**
**अव्यक्तोऽयमचिन्त्योऽयमविकार्य्योऽयमुच्यते ॥२४॥**

"नैनं शस्त्राणि छिन्दन्ती"त्याद्युक्ता तत्तद्योग्यताभावैरव प्रथमन्तम-भिधाय विशेषलक्षणैर्लक्षयितुं 'नित्यः' 'सर्व्वगतः' इत्यादिभिः शब्दैर्नोऽर्थतः पुनरुक्तान्यपि विशेषणान्येकत्र बोधसौकर्य्यार्थमुपन्यस्यति एव-मग्रेऽपि अच्छेद्य इति । अयं देही अच्छेद्य एव, अदाह्य एव, अक्लेद्य एव, अशोष्य एव ; नित्यः अविनाशी, सर्व्वगतः "स्वकर्म्मवशात् देव-मनुष्यतिर्य्यगादिदेहगतः" इति श्रीमद्विश्वनाथः, "स्वकर्म्महेतुकेषु देव-मानवादिषु पशुपक्ष्यादिषु च सर्व्वेषु शरीरेषु पर्य्यायेण गतः" इति श्रीमद्बलदेवः, स्थाणुः स्थिरस्वभावः स्थिरस्वरूपः रूपान्तरापत्तिशून्यः, अचलः अप्रकम्प्यः स्थिरगुणकः पूर्व्वरूपापरित्यागी, सनातनः शाश्वतः चिरन्तनः पुरातनः सर्व्वदैकरूपः, अव्यक्तः चक्षुराद्यग्राह्यः, अचिन्त्यः चिन्ताया अविषयः तर्कागोचरः, अविकार्य्यः निरवयवत्वात् कर्म्मेन्द्रियाणामगोचरः क्षीरादिवद्विकारानर्हः, अयं देही तत्त्वविद्भिरुच्यते । अत्र नित्यत्वेन घटादिवदनुत्पाद्यः, सर्व्वगतत्वेन ग्रामादिवदप्राप्यः, स्थाणुत्वा-दविकार्य्यः, अचलत्वाद्दर्पणवत् असंस्कार्य्यः ; एवमुत्पत्त्याप्तिविकृतिसंस्कृ-तिरूपचतुर्व्विधक्रियायाः कर्म्मत्वं न भजतेऽयमित्यन्यैर्व्याख्यातम् । एतत्तु परमात्मपक्ष एव सर्व्वथा सम्भवतीत्येष पक्षो नाचार्य्यैराश्रीयते । कथमेव-मनुमीयते, यतोऽत्र नात्मन उत्पत्तिः स्वीक्रियते, निरतिशयसूक्ष्मत्वात् प्राप्तिरपि ; विकृतिरपि तस्मिन्न सम्भवति चिदेकरसत्वात् तथैवाचार्य्यै-र्व्याख्येव ग्रहणात् ; सत्यम्, संस्कृतिस्तु तस्मिन् सम्भवत्येव, अन्यथा तम-धिकृत्य शास्त्रोपदेशस्य वैयर्थ्यं स्यात् । दर्पणः स्वयं स्वच्छः, न कदापि स्वयं स्वस्य स्वच्छत्वं जहाति, अथापि वाष्पादिसंसर्गान्मालिन्यं भजते, अतः संस्कारमपेक्षते ; एवं जीवात्मापि गुणसम्बन्धात् । शास्त्रविभागे यज्ञ एव यजमानस्य आत्मा भवतीत्युच्यते, तद्यथा "एष ह वै यजमान-

तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैवं शोचितुमर्हसि ॥२६॥
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्य्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

स्वामुष्मिंल्लोके आत्मा भवति यद्‌यज्ञः" (श, ब्रा, ११।१।८।६) इति । तेन च तस्य सर्व्वतनुत्वं परत्र जन्म च "सह सर्व्वतनुरेव यजमानोऽमुष्मिं- ल्लोके सम्भवति" इति । भगवदाराधनयैवात्मन आत्मत्वं, तया च तस्य कृतार्थतेति तत्त्वम् । २४ ।

अव्यक्तत्वाचिन्त्यत्वाविकार्य्यत्वनित्यत्वसर्व्वगतत्वादिरूपो यस्मादात्मा तस्मात्त्वमेवं विदित्वानुशोचितुमर्हसीत्युक्तोपसंहरति तस्मादेवमित्या- दिना । २५ ।

हरिद्राचूर्णसंयोगाद्रक्तत्वमिव भूतचतुष्टयसंयोगाच्चैतन्यमिति प्रथमः पक्षः । देहाद्भिन्नोऽपि विज्ञानस्वरूप आत्मा प्रतिक्षणपरिणामादुत्पत्ति- विनाशयोगीति द्वितीयपक्षः । नित्यस्यासावपूर्व्वेन्द्रियसम्बन्धाज्जातस्येति तृतीयपक्षः । "अहं देहाद्‌दन्येके नैतदस्तीति चापरे । केचित्संशयितं सर्व्वं निःसंशयमथापरे" इत्यादिभिः (४८अ, २—१३श्लो) आचार्य्येण तात्कालिकमतविरोधोऽनुगीतासु प्रदर्शितः । अथ चेदात्मन-विषये लोकानां मतद्वैधं दृष्ट्वा लौकिकदृष्ट्यैव तमन्यथा मन्यसे तथापि न शोककारणमस्तीत्युपपादयति अथेति । अथ चेतदभ्युपगमार्थः । पूर्व्व- पूर्व्ववाक्यैर्नित्यत्वे सिद्धेऽप्यनित्यत्वपक्षमभ्युपगम्य यदि एनमात्मानं नित्यजातं नित्यं वा मृतं मन्यसे तथापि परिणामस्वभावस्य देहस्योत्- पत्तिविनाशयोरपरिहार्य्यत्वादेनं, हे महाबाहो, त्वं शोचितुं नार्हसि योग्यो न भवसि । २६ ।

नित्यत्वानित्यत्वपक्षद्वयसाधारणशोकाकारणमाह जातस्येति । देहे- न्द्रियसम्बन्धवशात् जातस्य नित्यस्यानित्यस्य वा मृत्युरवस्थान्तरप्राप्ति-

**अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।**
**अव्यक्तनिधनान्येव तत्र का परिदेवना ॥२८॥**

**आश्चर्य्यवत् पश्यति कश्चिदेन-**
**माश्चर्य्यवद्वदति तथैव चान्यः ।**
**आश्चर्य्यवच्चैनमन्यः शृणोति ।**
**श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥**

ध्रुवो निश्चितः । मृतस्य च पूर्व्वशरीरेन्द्रियविगृहस्यारब्धकर्मोपादान-परिगतस्य वा जन्म अपूर्व्वशरीरेन्द्रिययोगो ध्रुवं निश्चितम् । तस्मा-दपरिहार्य्ये परिहर्त्तुमशक्येऽपरिवर्ज्जनीयेऽर्थे विषये न त्वं शोचितु-मर्हसि । २७ ।

आत्मनोऽशोच्यत्वेऽपि इष्टजनदेहविनाशजनितशोकानुभवो विदुषो-ऽपि स्यादेवेति तन्निराकरोति अव्यक्तादीनीति । अव्यक्तादीनि अव्यक्त-मदर्शनमनुपलब्धिरादिर्येषाम्, अव्यक्तं प्रधानमिति पक्षे नामरूपपरिहा-रात् सूक्ष्मं प्रधानमादिर्येषां तानि अव्यक्तादीनि भूतानि पृथिव्यादि-भूतमयानि शरीराणि व्यक्तमध्यानि जन्मानन्तरं मरणात्प्राक् नामरूप-योगात् व्यक्तान्युपलब्धानि सन्ति अव्यक्तनिधनानि पुनरव्यक्तमदर्शनं निधनं मरणं येषाम्, प्रधानमिति पक्षे अव्यक्ते प्रधाने निधनं नामरूप-विमर्द्दनलक्षणो विनाशो येषां तानि अव्यक्तनिधनान्येव । तत्र, हे भारत, का परिदेवना शोकनिमित्तो विलापः । एवमेतेषां स्वभाव इति ज्ञात्वा न त्वं शोचितुमर्हसि । असत्कार्य्यवादिभिर्यदत्र पक्षान्तरे तत्पक्षाश्रयेण व्याख्यानं कृतं, न तदाचार्य्यस्याभिप्रेतमिति तदुपेक्षि-तम् । एवमन्यत्र । २८ ।

न शोचितुमर्हसीति न सोपालम्भवचनं विदुषोऽपि शोकदर्शनात् किन्तर्हि तत्त्वज्ञानोपदेशेन नित्यानित्यत्वस्फूर्त्तिदर्शनमाहात्म्यं भवति, शोककलुषितचित्ते तु तद्विफलमिति शोकापनयनाय यत्नः । न खलु

देही नित्यमवध्योऽयं देहे सर्व्वस्य भारत ।
तस्मात्सर्व्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥
स्वधर्म्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥३१॥

वक्तव्यं देहस्य प्रत्यक्षविनाशदर्शनादहमिति प्रत्ययस्य च स्वतःसिद्धत्वात् निरर्थकोऽयं यत्न इति, दुर्बोधोऽयं ह्यात्मा, दर्शयति च तदाश्चर्य्यवदिति। कश्चिदाश्चर्य्यवत् आश्चर्य्यमदृष्टपूर्व्वमद्भुतमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्य्यवत् आश्चर्य्यमिव एनम् आत्मानं पश्यति। क्रियाविशेषणे —कश्चिदेनं यत्पश्यति तदाश्चर्य्यवत्, आत्मदर्शनमप्याश्चर्य्यवदेव। न हि कोऽपि स्वरूपत आत्मानं जानाति; यदा तस्य स्वरूपबोध उपतिष्ठते, तदाऽदृष्टपूर्व्ववस्तुदर्शनजन्यविस्मयेनापूर्णः, कथमेनमपश्यमिति तद्दर्शनमप्याश्चर्य्यमनुभवति। कर्त्तृविशेषणे—अहो अयमात्मानमपश्यदित्यन्योऽपि तमात्मदर्शनकर्त्तारमाश्चर्य्यवत् पश्यन्तीति। एवमन्यत्र; यथा, तथैवान्य आश्चर्य्यवदेनं वदति, वदति यत् तदाश्चर्य्यवत्, आश्चर्य्यवदन्य एनं वदति; अन्य आश्चर्य्यवदेनं शृणोति, शृणोति यत् तदाश्चर्य्यवत्, आश्चर्य्यवदन्य एनं शृणोति। श्रवणपरायणानामपि तज्ज्ञानं दुर्लभमित्याह—श्रुत्वापि कश्चिदेनं वेद, कश्चिन्न च। अतएव वक्ष्यत्याचार्य्यः—"यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः।" (७।३) श्रुतावपि "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विदुः। आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः॥" (कठः २।७) इति। २९।

इदानीमुक्तार्थमुपसंहरति सर्व्वप्राणिसाधारणाशोच्यत्वं प्रदर्शयन् देहीति। सर्व्वस्य प्राणिजातस्य देहेऽयं देही नित्यमवध्यः। तस्मात् सर्व्वाणि भीष्मादिभावापन्नानि 'देवस्थावरान्तानि' इति श्रीमद्रामानुजः, भूतानि न त्वं शोचितुमर्हसि। ३०।

आत्मनोऽविनाशित्वमवेक्ष्य विचलितुं नार्हसीत्युक्तम्, अधुना स्वधर्म-

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम्।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥
अथ चेत्त्वमिमं धर्म्यं सङ्ग्रामं न करिष्यसि।
ततः स्वधर्मं कीर्त्तिञ्च हित्वा पापमवाप्स्यसि ॥३३॥
अकीर्त्तिञ्चापि भूतानि कथयिष्यन्ति तेऽव्ययाम्।
सम्भावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ॥३४॥
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः।
येषाञ्च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

अपि चावेक्ष्य न विचलितुमर्हसीति प्रतिपादयति धर्म्याद्धि युद्धात् क्षत्रियस्यान्यत् श्रेयो न विद्यते इति स्पष्टार्थः। ३१।

यदृच्छयेति। यदृच्छया विना यत्नमुपपन्नं प्राप्तमपावृतमुद्घाटितं स्वर्गद्वारम्, ईदृशं युद्धं, हे पार्थ, सुखिनः सुभाग्या सुकृतिनो लभन्ते। विनाप्रयत्नमुपस्थितस्य समरस्य स्वर्गकारणत्वं कथमुक्तम्? लोभेन बलादिसम्भूतगर्व्वेण च परोद्वेजनाय युद्धारम्भः प्रत्यवायायैव भवति मोच-वासनामूलकत्वात्। यत्र तु प्रबलान्यायाचरणं शास्त्या न शमता-मुपैति, प्रत्युत शस्त्रसहायेन तदन्यायाचरणं बद्धमूलं कर्त्तुं क्वतोद्यमः प्रतिपक्षः, तत्र शमपक्षाश्रयिणां स्वप्रयत्नव्यतिरेकेण संग्राम उपस्थित इति धर्म्यं तद्युद्धं क्षत्रियस्य भवतीत्यभिप्रायः। एवं हि प्रतिपा-दितमुद्योगपर्व्वणि स्वयमाचार्य्येण। उक्तञ्च तत्र तेन, "यदा त्वष्टेव तु दम्भूतो नृशंसो विधिप्रकोपात् बलमाददानः। ततो राज्ञां समभवद्-द्रुमेतत् तत्र जातं वर्म्म शस्त्रं धनुश्च॥ इन्द्रेणैतद्दस्युवधाय कर्म्म उत्पा-दितं वर्म्म शस्त्रं धनुश्च। तत्र पुण्यं दस्युवधेन लभ्यते सोऽयं दोषः कुरुभिस्तीव्ररूपः॥ अधर्म्मज्ञैर्धर्म्ममबुध्यमानैः प्रादुर्भूतः सञ्जय तन्न साधु॥" (२९अ, २९—३१श्लो) इति। ३२।

एवमुपस्थितस्य युद्धस्य धर्म्यत्वे सिद्धे तदकरणमकीर्त्तये पापायेत्याह

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥३६॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

अथ चेदिति । अकीर्त्तिश्चापीति । भयादिति । अवाच्यवादांश्चेति । ३३—३६ ।

न हि निश्चयोऽस्ति युद्धे विजय एव स्यात्, अतः स्वयमाचार्य्य एवं सञ्जयं प्रत्युवाच—"न चेत् पित्र्ये कर्म्मणि वर्त्तमाना आपद्येरन् दिष्टवशेन मृत्युम् । तथा शक्त्या पूरयन्तः स्वकर्म्म तदप्येषां निधनं स्यात् प्रशस्तम् ॥" (उ, प, २८अ, २०श्लो) इति । अपि च भीमसेनञ्चापि स आह "कृतं मानुष्यकं कर्म्म दैवेनापि विरुध्यते" (उ, प, ७६अ, ८श्लो) इत्युपक्रम्य "लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्म्मणः । एवं बुद्धिः प्रवर्त्तेत फलं स्यादुभयान्तरं ॥ य एवं कृतबुद्धिः सन् कर्म्मस्वेव प्रवर्त्तते । नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ तत्रेयमनुमात्रा मे भीमसेन विवक्षिता । नैकान्तसिद्धिर्वक्तव्या शत्रुभिः सह संयुगे ॥" (११।१२।१३श्लो) इति । दैवप्रभावापनये त्वाचार्य्यस्य न सामर्थ्यमस्ति तत् स्वयमेवोक्तम् "दैवे च मानुषे चैव संयुक्तं लोककारणम् । अहं हि तत् करिष्यामि परं पुरुषकारतः ॥ दैवन्तु न मया शक्यं कर्म्म कर्त्तुं कथञ्चन ॥" (उ, प, ७८अ, ५।६श्लो) इति । एवं स्थिते जयपराजययोरुभयत्रैव लाभ इत्याह हतो वेति । सुगमोऽर्थः । ३७ ।

"हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्" इत्युक्त्या क्षत्रियस्य भोगसुखमनुसन्धाय युद्धाय प्ररोचनं न पुनर्वासनापरिहारं दर्शयति । यद्येवं न ततो बन्धुस्वजनवधजन्यपापनिष्कृतिरपि सम्भा-

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥

ध्यते इति पश्यन् कथं सा निष्पद्यते स्वधर्मरक्षणाच्च भवति तदाह सुख-दुःखे इति। सुखदुःखे समे तुल्ये लाभालाभौ जयाजयौ च समौ तुल्यौ कृत्वा केवलकर्त्तव्यबुद्ध्येति यावत् ततो युद्धाय युज्यस्व सन्नद्धो भव। एवं कर्त्तव्येऽनुष्ठिते पापं नावाप्स्यसि फलाभिसन्धिविरहितत्वात्। अत्र शास्त्रे फलाभिसन्धानत्याग एव नूतनं पन्थानमाविष्करोत्युपरिष्टात् स व्यक्तोभविष्यति। ३८।

एवमात्मज्ञानमुपदिश्य कर्मयोगं वक्तुमारभते एषेति। सांख्यः— 'परमार्थवस्तुविवेकविषयः' इति श्रीमच्छङ्करः, 'संख्या बुद्धिः बुद्ध्याव-धारणीयमात्मतत्त्वं सांख्यम्' इति श्रीमद्रामानुजः, 'सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्यां प्रकाशमानमात्म-तत्त्वं सांख्यम' इति श्रीमच्छ्रीधरः, 'सम्यक् ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्त्वमनयेति संख्योपनिषत्, तयैव तात्पर्य्यपरिस-मास्या प्रतिपाद्यते यः स सांख्य औपनिषदः पुरुषः' इति श्रीमन्मधु-सूदनः, 'औपनिषदं ब्रह्म' इति श्रीमन्नीलकण्ठः। 'न त्वेवाहम्' इत्यारभ्य 'तस्मात् सर्व्वाणि भूतानि' इत्यन्तेनात्मतत्त्वमेवाभिहितम्। अतएव सांख्ये आत्मतत्त्वे या बुद्धिः कर्त्तव्या सैषा तेऽभिहिता, योगे कर्मयोगे तु, 'भक्तियोगे' इति श्रीमद्विश्वनाथः, इमां बुद्धिं शृणु। यया बुद्ध्या युक्तः, हे पार्थ, कर्मबन्धं कर्मकृतं बन्धं—'कर्मैव धर्मा-धर्माख्यो बन्धः कर्मबन्धस्तम्' इति श्रीमच्छङ्करः, 'कर्मणा बन्धः संसारः' इति श्रीमद्रामानुजः, 'कर्मात्मकं बन्धम्' इति श्रीमच्छ्री-धरः—प्रहास्यसि प्रकर्षेण त्यक्ष्यसि। 'यया कर्मबन्धं प्रहास्यसि' इत्यत्र 'प्रलोभनार्थम्' इत्युक्त्वा 'तं प्रहास्यसीश्वरप्रसादनिमित्तज्ञान-प्राप्तेः' इति श्रीमच्छङ्करः; 'आत्मज्ञानपूर्व्वकमोक्षसाधनभूतकर्मानु-ष्ठाने यो बुद्धियोगो वक्तव्यः स इह योगशब्देनोच्यते......। तत्र

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

योगे या बुद्धिर्वक्तव्या तामिमामभिधीयमानां शृणु यया बुद्ध्या युक्तः कर्मबन्धं प्रहास्यसि' इति श्रीमद्रामानुजः; 'परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन् तत्प्रसादलब्धापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि' इति श्रीमच्छ्रीधरः; 'आत्मानन्दलिप्सया भगवदाज्ञया महाप्रयासानि कर्माणि कुर्वंस्तत्तदुद्देशमहिम्ना तदन्तरस्फुटितयात्मज्ञाननिष्ठया संसारं तरिष्यसि' इति श्रीमद्बलदेवः; 'कर्मनिमित्तो ज्ञानप्रतिबन्धः कर्मणैव धर्माख्येनापनेतुं शक्यते' इति श्रीमधुसूदनः; 'भोक्तृत्वकर्तृत्वाभिमानत्यागेन.........कर्मैव सजातीयोच्छेदनिमित्तं भविष्यति' इति श्रीमन्नीलकण्ठः; 'भक्तिविषयिण्या बुद्ध्या संसारं प्रहास्यसि' इति श्रीमद्विश्वनाथः। "योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय। सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥" (२।४८) इत्युक्त्वा "दूरेण ह्यवरं कर्म बुद्धियोगात्" (२।४९) "योगः कर्मसु कौशलम्" (२।५०) इत्यस्तेन फलाभिसन्धियुक्तकर्मकृतबन्धनस्य फलाभिसन्धिवर्जितकर्मयोगेन प्रहाणमाचार्यस्याभिप्रेतमिति दृष्ट्वा तदेवात्र वयमनुमोदयामः। ३९।

कृष्यादिकर्मवत् कर्मणां विघ्नबाहुल्यादनर्थकरत्वाच्च न योगेन कथं कर्मबन्धप्रहाणं सम्भवत्याशयमनुभूयाह नेहेति। इहाभिक्रमस्य प्रारम्भस्य नाशो निष्फलत्वं नास्ति, प्रत्यवायोऽङ्गवैकल्यनिबन्धनवैगुण्यं न विद्यते। अपि च अस्य धर्मस्य कर्मयोगाख्यस्य स्वल्पमपि महतो भयात् संसारात् त्रायते रक्षति। फलाभिसन्धानयुक्ते कर्मणि सर्वाङ्गोपसंहारं विना न फलोत्पत्तिः; यथा कृषिकर्मणि हलसंयोगबीजवपनादिकं कृत्वापि जलसेचनं विना न शस्योत्पत्तिः। यत्र न फलाभिसन्धानं केवलं कर्त्तव्यबुद्ध्या कर्मकरणं तत्र प्रतिबन्धवशादसमाप्तिरपि न श्रेयः प्रतिबध्नाति, यतस्तदस्यानुष्ठानमपि हृदयदर्शिनेश्वरेण बहु

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

भ्रश्यते। 'पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते' (६।४०) इति वक्ष्यति स्वयमाचार्य्योऽतएव। श्रीमद्विश्वनाथमते नात्र भगवदर्पित-निष्कामकर्म्मरूपो योगो विहितः, किन्तु श्रवणकीर्त्तनादिभक्तिरूप एव, तस्यैव त्रिगुणातीतत्वात् त्रिगुणातीतत्वे ध्वंसाभावाच्च। 'नैष्कर्म्म्यमप्यच्युतभाववर्ज्जितम्' (भा, १स्क, ५अ, १२श्लो) इति भागवतवाक्यमनुसृत्य तथा तस्य निरूपणं न शोभते, यतोऽत्र कर्म्मयोगे "ब्रह्मार्पणं ब्रह्म हविः" (४।२४) इत्यादिभिर्भगवद्भावयुक्त एव कर्म्मयोगो विहितः। ४०।

सांख्ये या बुद्धिर्योगे च, ते सामान्यतोऽभिधाय ताभ्यामन्यासां भेदमाह व्यवसायात्मिकेति। इह ज्ञानयोगे कर्म्मयोगे च,—केवलं कर्म्मयोग इत्यनेके, श्रीमद्विश्वनाथमते भक्तियोगे—एका व्यवसायात्मिका निश्चयस्वभावा बुद्धिः, अव्यवसायिनां निश्चयभावविरहितानां बुद्धयो हि बहुशाखा अनन्ताश्च। ज्ञानयोगे कर्म्मयोगे भक्तियोगे च लक्ष्यमेकमत एव बुद्धिरेका, स्वर्गपुत्रपश्वन्नादिकामानामव्यवसायिनां बुद्धयः फलानन्त्यादनन्ताः। एकस्मै फलाय चोदिते कर्म्मणि तदङ्गतावान्तरफलभेदेन तत्रापि बहुशाखाः। "नित्येषु नैमित्तिकेषु च कर्म्मसु प्रधानफलान्यवान्तरफलानि च यानि श्रूयमाणानि तानि सर्व्वाणि परित्यज्य मोक्षैकफलतया सर्व्वाणि कर्म्माण्येकशास्त्रार्थतयाऽनुष्ठेयानि, काम्यानि च स्ववर्णाश्रमोचितानि तत्तत्फलानि परित्यज्य मोक्षफलसाधनतया नित्यनैमित्तिकैरेकीकृत्य यथाबलमनुष्ठेयानी"त्याह श्रीमद्रामानुजः कर्म्मयोगमुपलक्ष्य। भक्तियोगमात्रपक्षपातिना श्रीमता विश्वनाथेन ज्ञानयोगेऽपि बुद्धिभेद एवं वर्णितः—"प्रथममन्तःकरणशुद्ध्यर्थं निष्कामकर्म्मणि बुद्धिः, ततस्तस्मिन् शुद्धे सति कर्म्मसन्न्यासे बुद्धिः, तदा ज्ञाने बुद्धिः, ज्ञानवैफल्याभावार्थं भक्तौ बुद्धिः। 'ज्ञानञ्च मयि सन्न्यसेत्' इति

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥
कामात्मानः स्वर्गपरा जन्मकर्म्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्य्यगतिं प्रति ॥४३॥
भोगैश्वर्य्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥४४॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

भगवदुक्तज्ञानसन्न्यासे च बुद्धिरिति बुद्धयोऽनन्ताः । कर्म्मज्ञानभक्तीनाम-वश्यानुष्ठेयत्वात् तत्तच्छाखा अप्यनन्ताः ।" इति । ४१ ।

येषां व्यवसायात्मिका बुद्धिर्नास्ति तेषां विमतिं वर्णयति त्रिभिः, यामिति, कामात्मान इति, भोगेति । अविपश्चितोऽविवेकिनो मूढ़ाः वेदवादरताः वेदेषु ये स्वर्गादिफलवादास्तेषु सक्ताः, नान्यदस्तीति वादिनः स्वर्गादिफलसाधनेभ्यो नान्यदस्तीति वदनशीलाः, कामात्मानः वैषयिकसुखवासनाग्रस्तचित्ताः, स्वर्गपराः स्वर्ग एव भोगोपक[illegible]पित-त्वेन परः श्रेष्ठो येषां ते स्वर्गपराः, जन्मकर्म्मफलप्रदां भो[illegible]श्वर्य्यगतिं भोगैश्वर्य्यप्राप्तिं प्रति क्रियाविशेषबहुलां ये क्रियावि[illegible]षज्योतिष्टोमा-दयस्ते बहुला यस्यां क्रियाविशेषबहुलां यामिमां पुष्पितामापातरम-णीयां वाचं प्रवदन्ति । तया वाचा अपहृतचेतसां भोगैश्वर्य्यप्रसक्तानां समाधौ मनसि अन्तःकरणे चित्तैकाग्रे बुद्धिः व्यवसायात्मिका न विधी-यते नोत्पद्यते । ४२—४४ ।

कथं वा वेदवादिनां व्यवसायात्मिका बुद्धिर्न भवति, कथं कर्म्मणि प्रवृत्तस्यापि सोदेति तदाह त्रैगुण्येति । त्रैगुण्यविषयाः त्रयोगुणाः सत्त्वरजस्तमांसि तएव त्रैगुण्यं तदेव विषयो येषाम्, अथवा त्रिगुणानां कर्म्म त्रैगुण्यं संसारः स एव प्रकाश्यत्वेन विषयो येषां तादृशा वेदाः

यतेदमुक्तं भवति ;—सत्त्वरजस्तम:प्रचुराणां पुरुषाणां सांसारिकेषु विषयेष्वनुरागवशात् स्वभावतस्ते तत्प्राप्त्यर्थनापरा एव भवन्ति। अतो वेदेषु धनजनपश्वादिकामनाविषयाणि स्तोत्राणि दृश्यन्ते, तत्प्रयोगेण च विविधं तत्फलञ्च यज्ञानुष्ठानञ्च। "काङ्क्षन्त: कर्म्मणां सिद्धिं यजन्त इह देवता:। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्म्मजा॥" (४।१२) इत्यत्राचार्य्येण वेदविहितानां कर्म्मणामनुष्ठानमिहलोक एव धनपुत्रादि-लाभार्थमेवेति प्रदर्श्यते। "अग्निना रयिमश्नवत् पोषमेव दिवे दिवे। यशसं वीरवत्तमम्।" (ऋ, सं १म, १सू, ३ऋक्) इत्याद्यासु तदेवोप-लभ्यते। ऐहलौकिकधनादिसाधनानां परलोकसाधनत्वञ्च यत् "अव-सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभि:" (ऋ, सं, १०म, १६सू, ५ऋक्) इत्याद्यासु लक्ष्यते, तत्तु यावज्जीवं यज्ञैर्देवानां सन्तोष-साधनादुपतिष्ठते। सांसारिकसुखानां परिणामविरसत्वमनुभूय यदा तत्त्यागेन नित्यसुखमन्विष्यति जीव:, तदा त्रिगुणातीतावस्थायां प्रवेशो भवति। वेदानतीत्य वेदान्तेषु सोपलभ्यते। न खलु वक्तव्यम्, वेदे-ष्वेव सर्व्वमस्ति किं वेदान्तपुराणादिभिरिति ; "यन्न दृष्टं हि वेदेषु तद्दृष्टं स्मृतिषु द्विजा:। उभयोर्यन्न दृष्टं हि तत्पुराणै: प्रगीयते॥" इति वैष्णवाचार्य्यकृता स्कान्दप्रभासखण्डोक्तिस्तदा विफलैव स्यात् ; सर्व्वत्र दृश्यमान: क्रमाभिव्यक्तिनियमोऽपि भज्येत। वैदिकक्षणभङ्गुरफलेषु वीतराग आचार्य्य: प्रपन्नं स्वसुहृदमनुकम्पते—हे अर्ज्जुन, त्वं निस्त्रैगुण्य: त्रयाणां गुणानां भाव: परस्परसंहननेन विकारित्वं त्रैगुण्यं तदतीतो निस्त्रैगुण्य: विकाररहित: धनादिलोचकामनाविरहितो निष्कामो भवेति। कस्य वा निष्कामत्वं सिद्धति तत्प्रदर्शनाय तं विशिनष्टि ;— निर्द्वन्द्व: सुखदु:खादिभ्यो निर्गतो निर्द्वन्द्व: द्वन्द्वसहो भव। सांसारिक-सुखदु:खादिषु निबद्धचेतास्तत्सहनाक्षमो न जातु त्रिगुणातीतधर्म्ममधि-कर्त्तुं शक्नोति। द्वन्द्वसहिष्णुत्वेऽपि स्वभावविद्युतिराशङ्कनीयेति पुनरपि विशिनष्टि नित्यसत्त्वस्थ:, 'सदा सत्त्वस्थ: सत्त्वगुणाश्रित:' इति श्रीम-च्छङ्कर: ; 'गुणद्वयविरहितनित्यप्रवृद्धसत्त्वस्थ:' इति श्रीमद्रामानुज: ;

'नित्यसत्त्वस्थः सन् धैर्य्यमवलम्ब्य' इति श्रीमच्छ्रीधरः ; 'नित्यं यत् सत्त्वमपरिणामित्वं जीवनिष्ठं तत्स्थः' इति श्रीमद्बलदेवः ; 'रजस्तमसी अभिभूय सत्त्वमात्रावलम्बने' इति श्रीमन्मधुसूदनः ; 'नित्यं सर्व्वदा सत्त्वं धैर्य्यं सत्त्वगुणो वा' इति श्रीमन्नीलकण्ठः ; 'नित्यैः सत्त्वैर्मद्भक्तैरेव सह तिष्ठतीति तथा सः' इति श्रीमद्विश्वनाथः ; वस्तुतस्तु नित्यमविकारि सद्ब्रह्म तद्भावापन्नत्वं सत्त्वं गुणविक्षोभजनितविकाररहितत्वं, तस्मिन्नात्मस्वभावे नित्यं तिष्ठतीति नित्यसत्त्वस्थः सदा स्वभावे विराजमानः । निर्द्वन्द्वोऽपि नित्यसत्त्वस्थोऽपि शरीरधारिणः क्षुत्पिपासादिवारणायाप्राप्तस्योपार्ज्जनं तद्रक्षणञ्चावश्यकमित्यवेक्ष्याह निर्योगक्षेमः उपार्ज्जनात् तद्रक्षणाद्विर्गतो भव । नन्विदं कथं वा भवेत्, यतः 'शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः' (३।८), 'भिक्षाचर्य्यं चरन्ति' (बृ, आ, ५।५।१) इत्यादिषु शरीररक्षणोपयोगिवस्तुसंग्रहस्तदर्थं श्रमश्चापरिहार्य्य इति शास्त्रेष्वपि लक्ष्यते ? तत्कथं निष्कामधर्म्माश्रयी योगक्षेमरहितो भवेदिति संशये "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥" (९।२२) इत्याचार्य्यश्रोक्तिर्दर्शयति—उपार्ज्जनरक्षणेषु चित्तमनभिनिविश्य भगवति चित्तनिवेशनं तदाज्ञापालनञ्च तस्य जीवातु, न तु संसारिणा[illegible] भरणपोषणभावनयोपार्ज्जनं रक्षणञ्च ; भिक्षाचर्य्यादिकमनायासा[illegible] न एवास्त भवतीति । एवमपि कदाचिदनपेक्षितपरीक्षाबाहुल्यात् पतनं सम्भव तीति सम्भाव्य विशिनष्टि त्वमात्मवान् भवेति । आत्मवान् अप्रमत्त विषयपारवश्यशून्यः आत्मस्वरूपान्वेषणपरः जितचित्त इति सर्व्वत्र[illegible] व्याख्यानेषु अन्नपानादिभ्यः सर्व्वेभ्यः आत्मैव पर इति ज्ञानसम्पन्न ततो विचलनं न सम्भवतीति प्रतिपाद्यते । "आत्मवान् सर्व्वकामन परित्यागेन परमेश्वरमाराधयतो मम स एव देहयात्रामात्रमपेक्षि[illegible] सम्पादयिष्यतीति निश्चित्य निश्चिन्तो भव" इत्यर्थं आत्मशब्दस्य परम आपरत्वे सिध्यति । ईश्वरे कर्म्मार्पणं योगे यदा विहितं, तदा पक्षो[illegible] न सर्व्वथाऽग्रहणीयोऽस्य प्रकरणस्यात्माधिकारप्रधानत्वेऽपि । श्रीमद्वि[illegible]

यावानर्थ उदपाने सर्व्वतः संप्लुतोदके ।
तावान् सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि ॥४७॥

..थेन निस्त्रैगुण्यविशेषणेन भक्तियोग एवात्र साधितः। अतस्तु तस्य पूर्व्वमेवोक्तमित्यलमधिकवर्णनेनात्र। ४५।

सर्व्वाणि कर्म्मफलानि परित्यज्य निष्कामतया कर्म्मानुष्ठाने किमु न अतिस्वल्पसुखसाधकानां कर्म्मफलानामभावादित्यपेक्षयाह यावा-निति। उदपाने—जातावेकवचनम्—अनेकस्मिन् क्षुद्रजलाशये यावान् अर्थः स्नानपानादिप्रयोजनम्, सर्व्वतः संप्लुतोदके एकस्मिन् महति जलाशये तावान् अर्थः भवत्येव महति क्षुद्रस्यान्तर्भावात्। एवं सर्व्वेषु वेदेषु यावान् अर्थः, विजानतः तत्त्वज्ञस्य तावानेव, क्षुद्रसुखानामनन्त-सुखेऽन्तर्भावात्। श्रीमद्रामानुजेनाप्यर्थान्तरं साधितम्, तद्यथा, "सर्व्वतः संप्लुतोदके उदपाने पिपासोर्यावान् अर्थः यावदेव पानीय-प्रयोजनं तावदेव तेनोपादीयते न सर्व्वम्, एवं सर्व्वेषु वेदेषु ब्राह्मणस्य विजानतः...... यदेव मोक्षसाधनं तदेवोपादेयं नान्यत्"। इति श्रीमद्विश्वनाथेन सकामाकामभक्तियोगपक्षे श्लोकमिमं संयोज्य सकाम-भक्तियोगादकामभक्तियोगस्यैव श्रेष्ठत्वं साधितम्—"मेघाद्यमिश्रस्य सौरकिरणस्य तीव्रत्वमिव भक्तियोगस्य ज्ञानकर्म्माद्यमिश्रत्वं तीव्रत्वं ज्ञेयम्। अत्र बहुभ्यो देवेभ्यो बहुकामसिद्धिरिति बहुबुद्धित्वमेव। एक-स्माद्भगवत एव सर्व्वकामसिद्धिरित्यंशेनैकबुद्धित्वमेव विषयसादृश्यात् ज्ञेयम्" इति। ४६।

कर्म्मणि किमुपादेयं किं वानुपादेयं तदेव स्फुटमाह कर्म्मण्येति। ते तव कर्म्मण्येवाधिकारः, मा कदाचन तदनुबन्धितया श्रूयमाणेषु फलेषु। अनेनाचार्य्यः स्वाभिमतं ज्ञापयति स्फुटमेतत् "द्वे मे मत-

योगस्थः कुरु कर्म्माणि सङ्गं त्यक्त्वा धनञ्जय।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥४८॥

मिदम्" (३।२१) इत्यादिषु। फलाकाङ्क्षया कर्म्मफलानां हेतुरुत्पादको मा भूः। कर्म्मानुष्ठानेन कर्म्मफलमवश्यं भवेदित्याशङ्कया कर्म्माकरणं वारयति, अकर्म्मणि कर्म्माकरणे ते तव सङ्गोऽनुरागो मास्तु। यत्राशङ्का विद्यते तत्र तदकरणमेव श्रेय इति जानता कथमिदमाचार्य्येणोक्तं 'मा ते सङ्गोऽस्त्वकर्म्मणि' इति? कर्म्मणः सर्व्वथाऽपरिहार्य्यत्वात्। अतएवोक्तं तेन "शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः" (३।८) इति; "ग्राह्यं दृश्यञ्च सत्यं वा यदिदं कर्म्म विद्यते। एतदेव व्यवस्यन्ति कर्म्म कर्म्मेति कर्म्मिणः॥ मोहमेव नियच्छन्ति कर्म्मणा ज्ञानवर्ज्जिताः। नैष्कर्म्यं न च लोकेऽस्मिन् मुहूर्त्तमपि लभ्यते॥" (अ, गी, २०अ, ६।७श्लो) इति च। श्रीमद्रामानुजं विनान्यैर्व्याख्यातृभिरत्र एवशब्दबलेन कर्म्मण्येव तवाधिकारो न तु ज्ञाने इति साधितम्। तत्तु न रुचिरम्—कर्म्मण्येव न तु फलेष्विति प्रस्तुतत्वात्। "कर्म्मणाहुः सिद्धिरेके परत्र हित्वा कर्म्म विद्यया सिद्धिरेके। नाभुञ्जानो भक्ष्यभोज्यस्य तृप्येद्विद्वानपीह विदितं ब्राह्मणानाम्। या वै विद्याः साधयन्तीह कर्म्म तासां फलं विद्यते नेतरासाम्॥" (उ, प, २८अ, ६।७श्लो) इत्यादिषु श्रीमदाचार्य्यवाक्येषु कर्म्म विना ज्ञानस्य वैफल्यं सुस्पष्टम्। ज्ञानं कर्म्मणि नियोजयति, यथा धर्म्मोपदेशादिषु; कर्म्मणा च ज्ञानस्फूर्त्तिः, यथाऽध्यापनादिभिः। अतएव कर्म्मणि नियोग आचार्य्येणार्ज्जुनस्य ज्ञानानधिकारित्वं सूचयति, तथा सति तस्मै ज्ञानोपदेशस्य वैफल्यमेव स्यात्। ४७।

तत् कथं कर्त्तव्यमिति जिज्ञासानिवृत्तये विवृणोति योगस्थ इति। हे धनञ्जय, सङ्गं फलाभिलाषं कर्त्तृत्वाभिनिवेशञ्च त्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वा फलसिद्धौ फलासिद्धौ समो हर्षविषादरहितो भूत्वा योगस्थः सन् कर्म्माणि कुरु। कोऽयं योगो यस्मिंस्तिष्ठन् कर्म्माणि कर्त्तव्यानि?

दूरेण ह्यवरं कर्म्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम् ॥५०॥

समत्वं योगः, यदेतत् सिद्धासिद्ध्योः समत्वं तदेव योगः, तेनाविक्षेपसिद्धत्वात् । ४८ ।

योगे या बुद्धिः सा व्यवसायात्मिकेत्यभिधाय समत्वमेव योग इति निर्णीय समत्वबुद्धियुक्तत्ववाचकेन बुद्धियोगशब्देन तदुभयोरेकत्वं सम्पाद्य तस्य श्रेष्ठत्वं वर्णयन्त्याचार्य्यो दूरेणेति । हे धनञ्जय, बुद्धियोगात् समत्वबुद्धियुक्तात् कर्म्मणः फलाभिसन्धानेन क्रियमाणं कर्म्म दूरेणातिविप्रकर्षेण अवरमधममपकृष्टम् । अतएव त्वं बुद्धौ समत्वविषयकबुद्धियोगे शरणमाश्रयमन्विच्छ, फलहेतवः फलतृष्णायुक्ताः फलसङ्गादिना कर्म्म कुर्व्वाणाः कृपणाः दीनाः । ४९ ।

किं स्याद्बुद्धियोगेन तदाह बुद्धियुक्त इति । इह कर्म्मसु बुद्धियुक्तः समत्वबुद्ध्या युक्तः उभे सुकृतदुष्कृते स्वर्गादिसाधकं सुकृतं निरयादिसाधकं दुष्कृतञ्च जहाति परित्यजति । "धर्म्मेण पापमपनुदति" इति बुद्धियुक्तस्य कर्म्मभिर्दुष्कृतत्यागो भविष्यति, कथं धर्म्मसजातीयस्य सुकृतस्य त्यागो भवेदिति संशयमुत्थाप्य सिद्धान्ते श्रीमन्नीलकण्ठेनोक्तम् "सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेति प्राञ्चः, अर्व्वाञ्चस्तु दुष्कृतत्यागमुक्तरीत्याभ्युपेत्य फलत्यागात् सुकृतत्यागोऽपि कर्म्मयोगिनो भवति, दुष्कृतफलबन्धोऽप्रतिबन्धकतत्फलस्यानुत्पादात्" इति । वस्तुतस्तु फलाकाङ्क्षायामनिरुद्धचित्तत्वात् तज्जनितसुखदुःखाद्युद्वेगविरहितत्वात्, आत्मनि परात्मनि वा चित्ताभिनिवेशस्यापराहतिः, तथा च सुकृताभिमानस्यानवसरः, स्वस्वरूपत्वात्तस्य स्वाभाविकत्वात् । एतदेव हि प्रकारान्तरेणोक्तम् आचार्य्येण—"तस्माद्योगाय युज्यस्व योगः कर्म्मसु कौशलम्"

कर्म्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्व्वेदं श्रोतव्यस्य श्रुतस्य च ॥५

इति । यत एवं फलं बुद्धियोगस्य तस्माद्योगाय उद्युक्तो कर्म्मसु कौशलं योगः । किमिदं कौशलम्? कर्म्म तदकरणं फलाभिसन्धिविरहितत्वात् । अतएव बन्धकस्याप्यस्य कत्वम् । ५० ।

तुच्छफलत्यागेन मोक्षप्राप्तिमाह कर्म्मजमिति । बुद्धियुक्ताः स बुद्धियुक्ताः मनीषिणः मननशीलाः आत्मयाथात्म्यज्ञानवन्तः कर्म्म अन्नवत् तुच्छं फलं त्यक्त्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धः जन्मात बन्धः जन्मना बन्धः जन्मबन्धः तेन विनिर्मुक्ताः जीवन्मुक्ताः सन्तः मयं सर्व्वोपद्रवरहितं क्लेशशून्यं पदं मोक्षाख्यं विष्णोः परमं गच्छन्ति प्राप्नुवन्ति । ५१ ।

कदात्मविषयकमनीषाभ्युदयेन परमपदप्राप्तियोग्यो भवतीत यदेति । यदा ते बुद्धिः मोहकलिलं मोहः देहादिष्वात्मबु॒द्धिरूपोऽ वेकस्तदेव कालुष्यं तुच्छफलाभिलाषहेतुकमज्ञानगहनं व्यतित ष्यति विशेषेणातिक्रमिष्यति प्रसन्ना भविष्यति, तदा श्रोतव्यस्य शा भागस्य श्रुतस्य च निर्वेदं वैराग्यं गन्तासि । सकलशास्त्रार्थसारभू विवेकजतत्त्वप्रस्फुरणात् तयोर्वैयर्थ्यमिति तदालोचनेन न तव का क्षेपणं स्यात् । एवं हि "ऋचो अक्षरे परमे व्योमन्" (१म, १६४ ३९ऋक्) इति ऋचमाश्रित्य साविश्राभिविद्याभिन्नमुद्दिश्य ब्राह्मणम "न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति यः सावित्रं वे (तै, ब्रा, ३।१०।९) इति । कथमिति जिज्ञासामपेक्ष्यात्र सायन भ "ऋगादीनां त्रयाणां वेदानामुक्तरीत्या परतत्त्ववेदनपर्य्यवसायित्व

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

ते तत्त्वे तत्पाठेन तदर्थानुष्ठानेन वा न किञ्चित्प्रयोजनमस्ति, न भ्यासुत्तीर्णायां नावा प्रयोजनं पश्यामः" इति । ५२ ।

श्रोतव्यस्य श्रुतस्य च निर्वेदादनन्तरं कदा योगमवाप्स्यतीत्याह श्रुति-तिपन्नेति । श्रुतिविप्रतिपन्ना श्रुतिभिर्विविधलौकिकवैदिकार्थ-भिः विप्रतिपन्ना विक्षिप्ता किंकर्त्तव्यविमूढ़ा ते बुद्धिः यदा निश्चला कात्मतत्त्वस्फूर्त्तौ अचञ्चला संशयरहिता समाधौ समाधीयते चित्त-प्रक्षिति समाधौ आत्मनि अचला निर्वातदीपवत् स्थिरा स्थास्यति, योगम् आत्मतत्त्वसाक्षात्कारं विवेकप्रज्ञाम् आप्स्यसि । इममेवार्थं न्तरेणाह श्रीमद्भागवतम्—"यदा यमनुगृह्णाति भगवानात्मभा-: । स जहाति मतिं लोके वेदे च परिनिष्ठिताम् ॥" (भा ४स्क, य, ४६श्लो) इति । अत्र श्रीमद्रामानुजेन तदनुसारिणा श्रीमद्वल-। च विप्रतिपन्नेति विशेषणस्य विशेषेण प्रतिपन्नेत्यर्थो निष्पन्नः; रुचिरम्, श्रोतव्यस्य श्रुतस्य च वैराग्येण किं भवतीति प्रदर्शनाय येश्लोकस्य प्रथमांशस्यावतारणात् । समाधौ परमेश्वर इति श्रीम-धरः, परमात्मनीति श्रीमधुसूदनः । षट्त्रिंशेऽस्मिन् शास्त्रे प्रथम-ध्यात्मैव प्रधानतोऽधिकृतविषय इति भाष्येऽस्मिन् तदनुसरणेनात्र ानम् । श्लोकेनानेन किमुक्तं भवति तदुक्तमेवं श्रीमद्रामानुजेन अध्यात्मज्ञानपूर्व्वकाकर्म्मयोगः स्थितप्रज्ञाख्यज्ञाननिष्ठामापादयति निष्ठारूपस्थितप्रज्ञता योगाख्यमात्मावलोकनं साधयति ।" इति ।५३ विप्रतिपन्नाया बुद्धेः स्थिरतायामात्मनि तस्या अविचलितभावेन ः; तदनन्तरमात्मसाक्षात्काररूपयोगश्चाभिहितः । अधुना

श्रीभगवानुवाच—

प्रजहाति यदा कामान् सर्व्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥

तद्गतो लक्षणादिकं ज्ञातुं पृच्छत्यर्ज्जुनः, स्थितप्रज्ञस्येति । हे केशव, स्थितप्रज्ञस्य स्थिता निश्चला प्रज्ञा बुद्धिर्यस्य तस्य समाधिस्थस्य आत्मनि स्थितस्य का भाषा को वाचकः शब्दः, भाष्यतेऽनयेति भाषा लक्षणं, किं लक्षणम् ? स्थितधीः स्थितप्रज्ञः व्यवहारिकावस्थायां किं प्रभाषेत स्तुतिनिन्दादिषु ब्रूयात्, किम् आसीत वहिरिन्द्रियनिग्रहेणावतिष्ठेत, किं व्रजेत विषयान् प्राप्नुयात् ? ५४ ।

प्रथमतस्तावदाचार्य्यः स्थितप्रज्ञस्य लक्षणं वक्तुमाह प्रजहातीति । हे पार्थ, यदा सर्व्वान् मनोगतान्—न त्वात्मगतास्ते तु सति तेषां स्वाभाविकत्वादपरिहार्य्यत्वमेव स्यात्—कामान् भोगाभिलाषान्, न त्वात्मनिष्ठापरिहार्य्ययोगाभिलाषान्, प्रकर्षेण सर्व्वतोभावेन जहाति आत्मना स्वयम् आत्मन्येव, न त्वात्मविरोधितुच्छ विषयेषु, तुष्टः परितृप्तः, तदा स स्थितप्रज्ञ उच्यते भाष्यते । इदमत्र यावदध्यायपरिसमाप्ति द्रष्टव्यम्—अत्र योगसिद्धस्य यानि लक्षणानि स्वरूपाभिव्यञ्जकवृत्ति विशेषकथनेनोक्तानि तान्येव तदसिद्धस्य साधनानीति । ५५ ।

किञ्च दुःखेष्विति । दुःखेषु क्षुत्पिपासाशोकमोहज्वरशिरोरोगादि ष्वाध्यात्मिकेषु सर्पव्याघ्रादिप्रयुक्तेष्वाधिभौतिकेषु, अतिवातवृष्ट्याद्युत्थि ष्वाधिदैविकेषु अनुद्विग्नमनाः अप्रक्षुभितमनाः, सुखेषु विगतस्पृ तृष्णाशून्यः, वीतरागभयक्रोधः विगतरागभयक्रोधः, मुनिरात्ममन शीलः, स्थितधीः स्थितप्रज्ञः, उच्यते भाष्यते । अत्र 'किं प्रभाषेत' स्योत्तररूपेणायं श्लोकः श्रीमद्बलदेवेन श्रीमन्मधुसूदनेन श्रीमद्विश्व थेन च महता प्रयत्नेन व्याख्यातः, तन्न रुचिरम्, 'उच्यते' इति ।

यः सर्व्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम्।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥
यदा संहरते चायं कूर्म्मोऽङ्गानीव सर्व्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

वे: किं भाषते इति सूचनात्। श्रीमद्रामानुजेन त्वेवमस्मिन् श्लोके ानन्निष्ठस्यादूरविप्रकृष्टावस्था व्याख्यानेन प्रतिपाद्यते;—"प्रियविश्ले- ादिदुःखनिमित्तेषूपस्थितेषु अनुद्विग्नमनाः न दुःखी भवति, सुखेषु विगतस्पृहः प्रियेषु सन्निहितेष्वपि निस्पृहः, वीतरागभयक्रोधः, अनाग- षु स्पृहा रागः तद्रहितः, प्रियविश्लेषाप्रियागमनहेतुदर्शननिमित्तं दुःखं य' तद्रहितः, प्रियविश्लेषाप्रियागमनहेतुभूतचेतनान्तरगतदुःखहेतुः मनोविकारः क्रोधः तद्रहितः........।" इति। ५६।

किं प्रभाषेतेत्यस्योत्तरमाह य इति। यः सर्व्वत्र सर्व्वेषु देहादिषु ानभिस्नेहः स्नेहशून्यः। स्नेहोऽत्र औपाधिक इति श्रीमद्बलदेवः; 'यस्मिन् सति अन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोऽन्यविषयः ममापरपर्य्यायस्तामसो वृत्तिविशेषः स्नेहः" इति श्रीमन्मधुसूदनः; 'अनिस्नेहवान् हि धनदारादिषु विकलेषु सकलेषु वा अहमेव विकलः कलोऽस्मीति दैन्यदर्पोपेतः" इति श्रीमन्नीलकण्ठः। अनात्मन्यनुरक्ति- भिस्नेह इति सुगमोऽर्थः, तेन च अनात्मविषयकसुखदुःखादिकमात्म- ारोप्यते, तच्छून्यः, अतएव तत्तत् शुभाशुभम् अनुकूलप्रतिकूलं सुख- हेतुं दुःखहेतुं विषयं प्राप्य नाभिनन्दति न प्रशंसति, न द्वेष्टि असूया- त्मकं न निन्दति अभिशपति वा। शुभं प्राप्य न तदर्पकं प्रति र्मिष्ठस्त्वं चिरं जीवे'ति, न वदति, मुष्टिप्रहारादिकञ्च प्राप्य पापात्मा त्वं नरके निपते'ति नाभिशपति। एवम्भूतस्य तस्य प्रज्ञा तिष्ठिता। स्तुतिनिन्दारूपा वाचो न भाषते, अपिच शुभं प्राप्य न ष्यति, अशुभं प्राप्य न द्वेष्टीति व्यतिरेकेण तल्लक्षणम्। ५७।

किमासीतेत्यस्योत्तरमाह यदेति। यदा च अयं योगी कूर्म्मो-

विषया विनिवर्त्तन्ते निराहारस्य देहिनः ।
रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते ॥५९॥
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

ऽङ्गानीव सर्व्वशः इन्द्रियार्थेभ्यः इन्द्रियाणि संहरति प्रत्याहरति प्रत्याहृत्यास्ते, तदा तस्य प्रज्ञा प्रतिष्ठिता। प्रजहातीत्यारभ्य चतुर्षु चतुर्विधा ज्ञाननिष्ठा पूर्व्वपूर्व्वोत्तरोत्तरनिष्पादिकेति श्रीमद्रामानुजः । ५८ ।

विषयेभ्य इन्द्रियाणां निवृत्तिर्जडानामातुराणामुपवासपराणाञ्च सम्भवतीति दृष्ट्वा केवलमिन्द्रियनिवृत्त्या न कृतार्थतेत्याह विषया इति। आहरणं ग्रहणमाहारः। इन्द्रियैर्विषयाणामाहारं ग्रहणमकुर्व्वतः विषयेभ्यः प्रत्याहृतेन्द्रियस्य देहिनः जड़स्यातुरस्योपवासपरस्य वा विषयाः शब्दादयः रसवर्ज्जं रसो रागस्तृष्णा तं वर्ज्जयित्वा विनिवर्त्तन्ते; शब्दादयो निवर्त्तन्ते किन्तु तद्विषयकाभिलाषो न निवर्त्तते इत्यर्थः। स रसः परं विषयेभ्यः परम् आत्मानं दृष्ट्वा तत्स्वरूपमनुभूय निवर्त्तते। 'परं परमार्थतत्त्वं ब्रह्म' इति श्रीमच्छङ्करः, 'परं परमात्मानम्' इति श्रीमच्छ्रीधरः, 'परं पुरुषार्थम्' इति श्रीमन्मधुसूदनः। ५९।

इन्द्रियसंयमं विना स्थितप्रज्ञता न सिध्यति, स च पुनर्न सामान्ययत्नसाध्यः; अतोऽत्र महान् यत्नः कर्त्तव्य इत्याह;—हे कौन्तेय, यततोऽपि भूयो भूयो विषयदोषदर्शनात्मकं यत्नं कुर्व्वतोऽपि हि विपश्चितः मेधाविनः शास्त्राचार्य्योपदेशवतः विषयात्मस्वरूपविवेकज्ञस्य पुरुषस्य इन्द्रियाणि चक्षुःश्रोत्रादीनि प्रसभं बलादिव मनो हरन्ति विकारं प्रापयन्ति विषयप्रवणं कुर्व्वन्ति। कथं विवेकिनोऽपि एवं विकारप्राप्तिः? इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि क्षोभकाणि अतिबलीयस्त्वात् विवेकज्ञानोपमर्द्दक्षमाणि। यथा प्रमाथिनो दस्यवः प्रभुणा नियुक्तं तद्रक्षकं प्रमथ्य पश्यत एव तस्य धनं हरन्ति, एवं हि

तानि सर्व्वाणि संयम्य युक्त आसीत मत्परः।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

इन्द्रियाणि पुरुषनियुक्तं रक्षकभूतं मनः प्रमथ्य ज्ञाननिष्ठासम्पदो हरन्ति। ६०।

इन्द्रियाणि संयम्य किं कर्त्तव्यं किञ्च वा तत्फलं तदाह तानीति। तानि सर्व्वाणि इन्द्रियाणि संयम्य वशीकृत्य युक्तः समाहितः निरुद्धचीत-मनाः सन् मत्परः आसीत। "अहं वासुदेवः सर्व्वप्रत्यगात्मा परो यस्य स मत्परः नान्योऽहं तस्मादिति आसीत" इति श्रीमच्छङ्करः; "चेतसः शुभाश्रयभूते मयि मनोऽवस्थाप्य समाहित आसीत" इति श्रीमद्रामा-नुजः; "अहं सर्व्वात्मा वासुदेव एव पर उत्कृष्ट उपादेयो यस्य स मत्परः एकान्तभक्तः" इति श्रीमन्मधुसूदनः। "बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते। वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः॥" (७।१८) इत्यत्राचार्य्यस्योक्तौ स्वमात्मनोपास्यत्वेनोपस्थापनमात्मनो दृश्यते; अथवानुगीतायामात्मानं स जीवत्वेन प्रतिपादयति, "मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम्। क्षेत्रज्ञ इति यश्चोक्तः सोऽह-मेव धनञ्जय॥" (२४अ, १२श्लो) इति। न च वक्तव्यम् "क्षेत्रज्ञञ्चापि मां विद्धि सर्व्वक्षेत्रेषु भारत।" (१३।२) इत्युक्तिक्रमेण "सर्व्वतः पाणि-पादन्तत् सर्व्वतोऽक्षिशिरोमुखम्। सर्व्वतः श्रुतिमल्लोके सर्व्वमावृत्य तिष्ठति॥" (१३।१३) इति जगज्जीवशरीरव्यक्तब्रह्ममहापुरुषोऽत्राभि-धेय इति; स हि योगावस्थायां व्यक्त उपदेष्टरि, नात्र योगावस्था, यतः "न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः। परं हि ब्रह्म कथितं योगयुक्तेन तन्मया। इतिहासन्तु वक्ष्यामि तस्मिन्नर्थे पुरातनम्॥" (१५,) इत्ययोगावस्थां स्वीकृत्य इतिहासत्वमुपेतस्य पूर्व्वानुभूततथ्य-स्यात्र कथनं गीतातोऽनुगीताया महान्तं भेदं दर्शयति। कैवल्यार्थ-मुपदेष्टरि ब्रह्मदर्शनमस्मिन् देशे महाभारतकालादपि प्राक् परम्परा-गतमासीदन्यथा भीष्मं भर्त्सयमानस्य शिशुपालस्येयमुक्तिरसमञ्जसा

स्यात्—"कथं भोजस्य पुरुषे वर्गपाले दुरात्मनि। समाविशयसे सर्व्वं जगत् केवलकाम्यया॥" (स, प, ४४अ, २६श्लो) इति। कथमन्ये आचार्य्याः स्वशिष्येभ्यः स्वान् ब्रह्मत्वेनोपस्थापयन्ति, यथा हि कपिलः स्वपितरं प्रति,—"गच्छ कामं मया पृष्टो मयि सन्न्यस्तकर्म्मणा। जित्वा सुदुर्ज्जयं मृत्युममृतत्वाय मां भज॥ मामात्मानं स्वयं ज्योतिः सर्व्वभूतगुहाशयम्। आत्मन्येवात्मना वीक्ष्य विशोकोऽभयमृच्छसि॥" (भा, ३स्क, २४अ, ३८।३९श्लो) इति। तथा च ऋषभः पुत्रान् प्रति—"ये वा मयीशे कृतसौहृदार्था जनेषु देहम्भरवार्त्तिकेषु। गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके॥" (भा, ५स्क, ५अ, ३श्लो) इति। स्वस्य वासुदेवत्वमपि स स्पष्टमुद्घोषयति,—"प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्।" (भा, ५स्क, ५अ, ६श्लो) इति। कोऽयं वासुदेवः? "सर्व्वत्रासौ समस्तञ्च वसत्यत्रेति वै यतः। ततः स वासुदेवेति विद्वद्भिः परिपठ्यते॥" (वि, पु, १अं, २अ, १२श्लो) इति। तेषामेवमात्मनामुपास्यत्वेनोपस्थापनस्य च किमत्र तत्त्वम्? दृश्यतां तद्ब्रह्मसूत्रे तद्भाष्ये च, तद्यथा—"शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (१।१।३०)। श्रीमच्छङ्करेणास्य सूत्रस्यैवं भाष्यं विरचितम्;—"स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म 'मामेव विजानीहि' इति। यथा 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्य्यश्चेति' इति तद्वत्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' इति श्रुतेः। यत् पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्म्मैरिन्द्र आत्मानं तुष्टाव त्वाष्ट्रवधादिभिरिति तत् परिहर्त्तव्यम्। अत्रोच्यते। न त्वाष्ट्रवधादीनां विज्ञेयेन्द्रस्तुत्यर्थत्वेनोपन्यासो यस्मादेवंकर्म्माहं तस्मान्मां विजानीहीति। कथन्तर्हि? विज्ञानस्तुत्यर्थत्वेन। यत्कारणं त्वाष्ट्रवधादीनि साहसान्युपन्यस्य परेण विज्ञानस्तुतिमनुसन्दधाति, 'तस्य मे तत्र लोम च न मीयते, स यो मां वेद न ह वै तस्य केनचन कर्म्मणा लोको मीयते' इत्यादिना। एतदुक्तं भवति,—यस्मादीदृशान्यपि

क्रूराणि कर्म्माणि कुर्व्वतो मम ब्रह्मभूतस्य लोमापि न हिंस्यते स योऽन्योऽपि मां वेद न तस्य केनचिदपि कर्म्मणा लोको हिंस्यत इति। विशेषस्तु ब्रह्मैव 'प्राणोऽस्मि प्रज्ञात्मे'ति वक्ष्यमाणम्। तस्माद्ब्रह्मवाक्यमेतत्" इति। श्रीमद्रामानुजेनैवमिदं व्याख्यातम्;—"प्रज्ञातजीवभावेनेन्द्रेण 'मामेव जानीहि,' 'मामुपास्व' इति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तः स्वात्मावलोकनकृतः अपि तु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं भवति,—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि', 'एतदात्म्यमिदं सर्व्वं', 'अन्तःप्रविष्टः शास्ता जनानां सर्व्वात्मा', 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति एष सर्व्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहन्त्वमादिशब्दानां परमात्मन्येव पर्य्यवसानं ज्ञात्वा 'मामेव विजानीहि', 'मामुपास्व' इति स्वात्मशरीरं परमात्मानमेवोपास्यत्वेनोपदिदेशेति वामदेववत्, यथा वामदेवः परस्य ब्रह्मणः सर्व्वान्तरात्मत्वं सर्व्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्य्यवसानं पश्यन्, अहमिति स्वात्मशरीरकं परं ब्रह्म निर्द्दिश्य तत्सामानाधिकरण्येन मनुसूर्य्यादीन् व्यपदिशति, 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य्यश्च, अहं कक्षीवान् ऋषिर्विप्रः' इत्यादि। यथाच प्रह्लादः, 'सर्व्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तः सर्व्वमहं सर्व्वं मयि सर्व्वं सनातने' इत्यादि वदति" इति। द्वैतवादिना श्रीमन्माध्वेनाप्यत्रोक्तं, "शास्त्रान्तर्यामी 'संविष्टाख्यं परं पदम्' इति हि भागवते। 'तत्तच्छास्त्रोच्यते विष्णुः सर्व्वशास्त्रस्य हेतुतः। न क्वापि किञ्चिन्नामास्ति तदृते पुरुषोत्तमम्॥' इति पाद्मे। 'अहं मनुरभवं सूर्य्यश्च' इत्यादिवत्" इति। श्रीमज्जीवेनापि सूत्रमिदमुपलक्ष्योक्तं "'प्राणो वा अहमस्मि पुरुषः' इत्यादिकं यत् स्वस्य परमेश्वरत्वमिवोपदिष्टमिन्द्रेण तत्तु 'तत्त्वमसि' इत्याद्यभेदप्रतिपादकशास्त्रदृष्ट्या सम्भवति, चिदाकारसाम्ये-

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते।
सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते ॥६२॥

नैक्यात्, क्वचिदधिष्ठानाधिष्ठात्रोरेकशब्दप्रत्ययाभ्यां वा शरीरशरीरिणोर्वा, यथैव वामदेव उवाच 'अहं मनुरभवं सूर्य्यश्च' इत्यादि" इति। तत्त्वमुक्तं वेदान्तस्यमन्तके गोविन्दकान्तेनापरनाम्ना श्रीमद्बलदेवेन, "स च परमात्मा हरिरस्मदर्थो बोध्यः, 'अहमात्मा गुडाकेश' इत्यादिव्याख्याहमर्थयोरभेदस्मरणात्।" "ब्रह्माविर्भावेषु भेदयाष्टी निन्द्यते" इति। ननु दृश्यते युधिष्ठिरोक्तौ "चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ। अपक्रान्तो यतो देवस्तेन मे विस्मितं मनः॥" (शा, प, ४६अ, २श्लो) इति तस्य परब्रह्मण्येव नियतस्थितिः ; तत् कथं कदापि योगयुक्तत्वस्य कदाप्ययोगयुक्तत्वस्य तस्मिन्नारोपः? उच्यते, ध्यानकाले तुरीयब्रह्मणि स्थितिः, व्यवहारदशायान्तु स्थितप्रज्ञतया मनोबुद्धीन्द्रियगोचर इति ध्यानाध्यानावस्थयोर्महत्त्वार्थक्यं तस्मिन्नासीत्। व्यज्यते चैतत् तस्य युधिष्ठिरप्रश्नोत्तरदानकाले, तद्यथा "ततः स्वे गोचरे न्यस्य मनोबुद्धीन्द्रियाणि सः। स्मितपूर्व्वमुवाचेदं भगवान् वासवानुजः॥" (शा, प, ४६अ, १०श्लो) इति। स्थितप्रज्ञतया स्थितौ परब्रह्मणा योगः स्वरूपैक्येऽप्यपरोक्षज्ञानाविषयत्वादपरिस्फुटः, तस्मिंश्चित्तसमाधाने स्फुटतर इति भेदोऽत्र बोध्यः। 'युक्त आसीत मत्परः' इति किमासीतेत्यत्रोत्तरमनेके वर्णयन्ति। यस्य वशे इन्द्रियाणि अभ्यासवशात् वर्त्तन्ते तस्य प्रज्ञा प्रतिष्ठिता। केवलेन योगाख्येनात्मावलोकनेन न कृतार्थतेति, अहं मम मयीत्यादिशब्दैर्ब्रह्मशब्देन वा षट्केऽस्मिन् क्वचित् क्वचिदन्तर्यामिनमुपस्थापयन्त्याचार्य्याः, न तेन वक्तव्यस्य योगस्य हानिः, यतोऽस्य सिद्धिरन्तर्यामिणाभिन्नभावेन स्थित्या, नान्यथा। अपिच समन्वयप्रधानशास्त्रस्य सर्व्वत्रैव योगत्रयाणां मिलनभूमिरवश्यद्रष्टव्या। ६१।

मनोऽनिरुद्ध्य बाह्येन्द्रियाणां संयमे न कृतार्थतेत्याह द्वाभ्यां ध्यायत इति, क्रोधादिति। विषयान् शब्दादीन् ध्यायतश्चिन्तयतः पुंसः पुरु-

क्रोधात् भवति सम्मोहः सम्मोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात् प्रणश्यति ॥६३॥
रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

यस्य तेषु विषयेषु सङ्गः आसक्तिः सुखबुद्ध्या प्रीतिः उपजायते उत्पद्यते ; सङ्गात् कामः तृष्णा अभिलाषः सञ्जायते समुत्पद्यते ; कामात् कुतश्चित् प्रतिहन्यमानात् क्रोधः अभिजायते उत्पद्यते ; क्रोधात् सम्मोहः कार्य्या-कार्य्याविवेकः भवति ; सम्मोहात् स्मृतिविभ्रमः प्रारब्धे इन्द्रियजयादिके प्रयत्ने या स्मृतिः शास्त्राचार्य्योपदिष्टानुसन्धानरूपा तस्या विभ्रमः भ्रंशः ; स्मृतिभ्रंशात् बुद्धिनाशः बुद्धिः आत्मज्ञानेऽध्यवसायः तस्या नाशः कार्य्याकार्य्यविषयविवेकायोग्यता भवति ; बुद्धिनाशात् प्रणश्यति पुरु-षार्थायोग्यः पुनर्विषयभोगनिमग्नो भवति । पूर्व्वश्लोकात् मत्पर इति विशेषणमाकृष्य तत्स्वरसात् श्रीमद्रामानुजेनाप्युक्तम् "अनिरस्तविषया-नुरागस्य हि मय्यनिवेशितमनस इन्द्रियाणि संयम्यावस्थितस्यापि अना-दिपापवासनया विषयध्यानमवर्ज्जनीयं स्यात्" इति । ६२।६३ ।

विषयाभिध्यानादनर्थोत्पत्तिरिति ब्रुवन्नधुना मोक्षकारणमुच्यते रागेति । रागद्वेषविमुक्तैः रागश्च द्वेषश्च रागद्वेषौ स्वाभाविकेन्द्रियप्रवृ-त्तिहेतू ताभ्यां विमुक्तैः आत्मवश्यैः आत्मनो वश्यानि वशीभूतानि तैः इन्द्रियैः श्रोत्रादिभिः विषयान् अवर्ज्जनीयाननिषिद्धानशनपानादीन् चरन् उपलभमानो भुञ्जानोऽपि विधेयात्मा विधेयो वशवर्त्ती आत्मा अन्तःकरणं यस्य स प्रसादं प्रसन्नतां स्वास्थ्यं विमलतां शान्तिम् अधि-गच्छति प्राप्नोति । मनसि स्ववशे न रागद्वेषौ प्रभवतः, तयोरभावे तदधीनेन्द्रियप्रवृत्तेर्दोषानवसरः ; सुतरां तादृशैरिन्द्रियैर्विषयान् भुञ्जा-नस्यापि न मुक्तेर्व्याघातः । आत्मवश्यैरिन्द्रियैर्विषयांश्चरन्नित्यनेन कथं व्रजेतेत्यस्योत्तरम् । ६४ ।

प्रसादे सर्व्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठते ॥६५॥
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥६६॥
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥
तस्माद्यस्य महाबाहो निगृहीतानि सर्व्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

प्रसादे सति किं भवतीत्याह प्रसाद इति। प्रसादे सति प्रकृतिसंसर्गप्रयुक्तानामाध्यात्मिकादीनां दुःखानां हानिर्नाश उपजायते प्रसन्नचेतसः स्वच्छान्तःकरणस्य आत्मावलोकनविरोधिविविधदोषरहितचित्तस्य हि आशु बुद्धिः पर्य्यवतिष्ठते प्रतिष्ठिता स्थिरा आत्मस्वरूपेणैव निश्चला भवति। ६५।

व्यतिरेकमुखेनोक्तमर्थं द्रढ़यति नास्तीति। अयुक्तस्य असमाहितान्तःकरणस्य न बुद्धिः आत्मस्वरूपविषया प्रज्ञा, न च अयुक्तस्य भावना ध्यानम् आत्मज्ञानाभिनिवेशः अस्ति। अभावयतः आत्मज्ञानाभिनिवेशमकुर्व्वतः शान्तिः उपशमः विषयतृष्णानिवृत्तिर्नास्ति। अशान्तस्य अनिवृत्तविषयतृष्णस्य कुतः सुखम् आत्मानन्दः। ६६।

अयुक्तस्य कथं बुद्धिर्नास्तीत्याह इन्द्रियाणामिति। चरतां स्वविषयेषु प्रवर्त्तमानानाम् इन्द्रियाणां मध्ये यद् एकमिन्द्रियं श्रोत्रं वा चक्षुर्वा अनु लक्ष्यीकृत्य यदा मनो विधीयते प्रवर्त्तते तत् इन्द्रियम् एकमपि, किमु वक्तव्यं सर्व्वाणीति, अस्य पुरुषस्य प्रज्ञाम् आत्मानात्मविवेकजां वायुर्नावमम्भसीव हरति नाशयति विषयविक्षिप्तां करोति।६७।

'यततोऽपी'त्युपक्रान्तस्यार्थस्य बहुधोपपत्तिमुक्तोपसंहरति तस्मादिति। यस्मादसमाहितेन मनसेन्द्रियाणि प्रज्ञामपहरन्ति, तस्मात्

या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥

आपूर्य्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्व्वे
स शान्तिमाप्नोति न कामकामी ॥७०॥

हे महाबाहो वैरिनिग्रहसमर्थ, सर्व्वशः सर्व्वप्रकारैः यस्य इन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता। ६८।

युक्तस्यायुक्तस्य च प्रभेदं दर्शयितुं सिद्धामसिद्धाञ्चावस्थामाह या निशेति। बुद्धिर्हि द्विविधा—आत्मनिष्ठा विषयनिष्ठा च। युक्तस्यात्मनिष्ठा या बुद्धिः सा सर्व्वभूतानां निशा निशेव निशा आत्मतत्त्वस्याप्रकाशिका तमोभूतैव सा। तस्यामात्मनिष्ठायां बुद्धौ संयमी जितेन्द्रियो योगी जागर्त्ति आत्मानमवलोकयन्नास्ते। यस्यामयुक्तस्य विषयनिष्ठायां बुद्धौ भूतानि जाग्रति विषयविभागव्यापृतानि तिष्ठन्ति, पश्यतः अपरोक्षानुभववतो मुनेः स्थितप्रज्ञस्य सा निशा निशेव निशा विषयभोगानामप्रकाशिका। ६९।

इन्द्रियाणि विषयेभ्यः संहृत्यात्मनि तिष्ठेदित्युक्तम्। किमिदं सर्व्वव्यवहारनिवृत्तये, अथवा तेन विषयासक्तिविरहितत्वादविकारित्वमेवाभिप्रेतमिति स्फुटयन्नाह आपूर्य्यमाणमिति। प्रविशन्तीभिर्नदीभिरापूर्य्यमाणम् अथच अचलप्रतिष्ठम् अनतिक्रान्तमर्य्यादं समुद्रं क्षयवृद्धिहीनम् आपः वृष्ट्यादिप्रभवाः यद्वत् येन प्रकारेण प्रविशन्ति, न तु कञ्चिद्विशेषं कर्त्तुं शक्नुवन्ति, तद्वत् तेन प्रकारेण सर्व्वे कामाः यं प्रविशन्ति न तु विकर्त्तुं प्रभवन्ति, स शान्तिम् आप्नोति, न कामकामी, काम्यन्त इति कामाः विषयास्तान् कामयितुं शीलं यस्य स कामकामी शान्तिं नाप्नोति, तस्य विकाराधीनत्वात्। ७०।

विहाय कामान् यः सर्व्वान् पुमांश्चरति निस्पृहः ।
निर्म्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥७१॥
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्व्वाणमृच्छति ॥७२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्ज्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ।

यस्मादेवं तस्माद्विहायेति । सर्व्वान् कामान् विषयान् विहाय तत्राभिनिवेशं परित्यज्य निस्पृहः स्पृहाशून्यः निर्म्ममः ममेदमित्यभिमानवर्ज्जितः, निरहङ्कारः विद्यावत्त्वादिनिमित्तात्मसम्भावनाविरहितः चरति संसारे तद्भावेन जीवनं निर्व्वहति, स शान्तिम् आप्नोति । व्रजेत किमित्यस्योत्तरम् । ७१ ।

स्थिरप्रज्ञतां स्तुवन्नुपसंहरति । ब्राह्मी—ब्रह्मणि भवेति श्रीमच्छङ्करः, ब्रह्मप्रापिकेति श्रीमद्रामानुजः, ब्रह्मविषयेति श्रीमन्मधुसूदनः, ब्रह्मशब्दे नात्र ब्रह्मविदुच्यते तस्येयं ब्राह्मी स्थितिरिति श्रीमन्नीलकण्ठः । स्थितप्रज्ञतायामात्मनः स्वरूपेऽवस्थानं भवति तेन च ब्रह्मणा स्वरूपैक्यम्, न पुनस्तस्यामपरोक्षज्ञानतो ब्रह्मणि स्थितिरिति व्याख्यानान्येतानि दर्शयन्ति । अतएव एषा स्थितप्रज्ञता ब्राह्मी ब्रह्मस्वरूपैक्यात् ब्र भावापन्ना ब्रह्मविषया ब्रह्मप्रापिका वा स्थितिः । "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" (५।११६) इति सांख्यसूत्रे इममेवार्थं दर्शयति । तथाच भाष्यम् 'ब्रह्मरूपता बुद्धिवृत्तिविलयतः तदौपाधिकपरिच्छेदविगमेन स्वस्वरूपपूर्णतावस्थानम् ।......अस्मिन् शास्त्रे च ब्रह्मशब्द औपाधिकपरिच्छेदसामान्यादिरहितपरिपूर्णचेतनमात्रवाची । न तु ब्रह्ममीमांसायामिव ऐश्वर्य्योपलक्षितपुरुषमात्रवाचीति विवेक्तव्यम् ।" इति । हे पार्थ, एनां प्राप्य न मुह्यति न संसारमोहं प्राप्नोति । अस्यां स्थितौ स्थित्वा अन्तकालेऽपि अन्तिमे वयसि मृत्युकालेऽपि ब्रह्मनिर्व्वाणं

ब्रह्मनिर्वृतिं ब्रह्मसुखं ब्रह्मैक्यम् ऋच्छति प्राप्नोति। "निष्काम-कर्म्मभिर्ज्ञानी हरिमिव स्मरन् चरेत्। अन्यथा विघ्न एवेति द्वितीया-ध्यायनिर्णयः॥" इति श्रीमद्बलदेवकृतार्थसंग्रहः। श्रीमन्मधुसूदनस्य तु "ज्ञानं तत्साधनं कर्म्म चित्तशुद्धिश्च तत्फलम्। तत्फलं ज्ञाननि-ष्ठैवेत्यध्यायेऽस्मिन् प्रकीर्त्तितम्॥" इति। "नित्यात्मकर्म्मसङ्गेहागो-चरा सांख्ययोगधीः। द्वितीये स्थिरधीलक्षा प्रोक्ता तन्मोहशान्तये॥" इति श्रीयामुनमुनिकृतगीतार्थसंग्रहमनुसृत्य श्रीमद्रामानुज आह, "नित्यात्मविषया सांख्यबुद्धिः, तत्पूर्व्विका चासङ्गकर्म्मानुष्ठानरूपा कर्म्मयोगविषया बुद्धिः स्थितप्रज्ञता योगसाधनभूता द्वितीयेऽध्याये प्रोक्ता" इति। समग्राध्यायसमालोचनेनोक्तिरियं समीचीनेति सहज-बुद्धौ प्रतिभाति। ७२।

इति श्रीमद्भगवद्गीतासमन्वयभाष्ये द्वितीयोऽध्यायः।

# तृतीयोऽध्यायः।

अर्जुन उवाच—

ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिर्जनार्दन।
तत् किं कर्म्मणि घोरे मां नियोजयसि केशव॥१॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम्॥२॥

द्वितीयाध्याये द्विविधा निष्ठा प्रोक्ता, ज्ञाननिष्ठा कर्म्मनिष्ठा च। न तयोरैक्यं प्रदर्शितं श्रीमदाचार्य्येण; अपि च "स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्" (२।४०) इति कर्म्मनिष्ठां प्रशंस्य, वेदविहित-कर्म्मनिष्ठानामव्यवसायित्वमनन्तबुद्धिभेदञ्चोद्दोष्य "ब्राह्मणस्य विजानतः" (२।४३) इत्यनेन ज्ञानमेव प्रशंसितवान्। परन्तु "दूरेण ह्यवरं कर्म्म" (२।४९) इति कर्म्मनिन्दानन्तरं, "समाधावचला बुद्धिस्तदा योगमवा-प्स्यसि" (२।५३) इति ज्ञाननिष्ठाया एव सर्व्वोत्तमत्वं संस्थाप्य आ अध्यायपरिसमाप्तेर्ज्ञाननिष्ठामेव स्तौति। सुतरां मध्येऽत्र यत् "समत्वं योग उच्यते," (२।४८) "योगः कर्म्मसु कौशलम्" (२।५०) इत्युक्तम्, तस्याप्रधानत्वेनैव ग्रहणमभिप्रेतमिति सम्भाव्य अर्ज्जुनः सख्यभावादुपा-लम्भवाक्येन किं श्रेय इति पृच्छति द्वाभ्यां ज्यायसीति, व्यामिश्रेणेति; —कर्म्मणो निष्कामात् बुद्धिः आत्मतत्त्वविषया ज्यायसी प्रशस्ततरा चेत्, तत् तदा घोरे हिंसात्मके कर्म्मणि, हे केशव, किं मां नियोज-यसि? व्यामिश्रेण कर्म्मप्रशंसाज्ञानप्रशंसारूपेण सन्देहोत्पादकेनेव वाक्येन—इवशब्देन सन्देहोत्पादनं नाभिप्रेतं, मन्दबुद्धित्वात् तथानु-भूतमिति द्योतयति—मम बुद्धिं मोहयसीव, इवेन न ते बुद्धिमोहनम-भिमतं ममैव विवेकज्ञानाभावात् तथा प्रतिभातीति ज्ञापयति।

अत्र समुच्चयवादिनोऽसमुच्चयवादिनो विप्रवदन्ति। यद्यपि तेषां

विवादविचारणे नास्माकं कौतूहलमस्ति, तथाप्याचार्यस्य मतमत्र विवेक्तव्यमन्यथा तं प्रति स्वाभ्यन्तरविचारः। विना तदाश्रयं न वयं नस्मासिवाभिमनुमोदयामः। अतस्तद्वाक्येस्तवयं निर्णेतु यतिष्यामहे। अर्जुनप्रश्नोत्तरदाने यत्तेनोक्तं "लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ।" (३।३) इति, न तन्निष्ठाद्वयस्य पार्थक्यसाधकम्; किन्तर्हि लोकप्रसिद्धिप्रदर्शनपरम्, अन्यथा लोकप्रसिद्धेरयुक्तत्वं प्रदर्शयितुं न तेनोक्तेत "न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। न च सन्न्यसनादेव सिद्धिं समधिगच्छति॥" (३।४) इति। न च वक्तव्यं, कर्म्मारम्भस्य नैष्कर्म्योपायत्वादेवमुक्तमाचार्य्येणेति, यदि तथैव स्यात्, तर्हि पञ्चमाध्याये नेवमुच्येत तेन, "सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः। एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥ यत् सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते। एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति॥" (५।४।५) इति। नात्र सांख्ययोगयोः किन्तु तयोः फले एवापृथक्त्वमेकत्वञ्चेत्युक्तिर्न समीचीना। तथा सति 'सांख्ययोगौ पृथक् न पण्डिता वदन्ति,' 'एकं सांख्यञ्च योगञ्च' इति वचनं निरर्थकं स्यात्; फले चैक्यं तेषामेकत्वादेव सिध्यति, पृथक्त्वे पृथक् फलमेव स्यात्। आरम्भात्तेषामैक्यं न प्रतिभाति किन्तु पार्थक्यमेव। यदा तु ज्ञाने कर्म्मणि वा सम्यगनुष्ठानात् सिद्धिः सञ्जायते, तदा तेषामपृथक्त्वमेकत्वञ्च प्रतिभाति। अतएवोक्तं "सम्यगास्थितः" इति। हृदयस्थाचार्य्य इममर्थं षष्ठे, "यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव। न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन॥" (६।२) इत्यनेन। एकैनान्यस्य फललाभ एवं भवति;—यदा कश्चित् कर्म्मानुष्ठाने शिथिलयत्नः सन् ज्ञानाभ्यासनिरतो भवति, तदा तस्मिन्निवृत्तियोग उपतिष्ठते; तस्मिन् सिद्धे पुनर्भगवदाराधने जीवानां दुःखहरणे च प्रवृत्तिरुदेति यथा शुकादौ। अथ पुनः कर्म्मानुष्ठाने प्रवृत्तस्य यदा भगवति तदर्पणं सिध्यति, तदा "अभिजानाति यावान् यश्चास्मि तत्त्वतः" (१८।५५) इति न्यायेन भगवज्ज्ञानसम्पन्ने तस्मिन् निवृत्तिपूर्व्वकमेव भगवदारा-

धनजीवद्:खहरणप्रवृत्तिर्वर्त्तते। एवमापातविरुद्धवत्प्रतीयमानविषयद्वयं सम्यक्स्फूर्त्तौ विरोधं परिहाय तयोरन्तर्निहितमेकत्वं प्रकटीकरोतीति व्यापारोऽसम्यगनुष्ठातृभिर्नोपलभ्यते ; अत: पक्षद्वयमाश्रित्य ते भिन्नं वदन्ति। यथाहि, वैराग्यपथाश्रयिणोऽनुरागपथाश्रयिणश्च। न हि आरम्भे वैराग्यानुरागयोरेकत्वं प्रतिभाति। यदा तु परवैराग्येण भगवत्यनुराग उदेति, तदा न केवलं भगवत्येव तेषां भिन्नपथाश्रयिणामेकता, किन्तर्हि जीवविषयेऽपि। "विषयेषु गरिष्ठोऽपि राग: प्रायो विलीयते।" (ह, भ, र, सि,) इति न्यायेनानुरागपथावलम्बकानां परवैराग्योदय:, तेन च वैराग्यपथाश्रयिभिरुक्तभूमावेकता। "कर्म्मसन्यासात् कर्म्मयोगो विशिष्यते" (५।२) इत्याचार्य्यस्योक्ति: कर्म्मयोगपक्षपातविजृम्भितेति संशयोऽकिञ्चित्कर:, सर्व्वत्र कर्म्मज्ञानभक्तियोगानामैक्यं सम्पादयता तेन विना कर्म्मान्यद्योगद्वयं मुहूर्त्तमपि न तिष्ठत्युदेति वेति प्रदर्शनार्थमेवमुक्तमिति तत्त्वम्। ज्ञानपक्षपातिभिर्ज्ञानं, भक्तिपक्षपातिभिर्भक्ति:, कर्म्मपक्षपातिभि: कर्म्मैवास्य शास्त्रस्य मुख्यं प्रतिपाद्यमिति विप्रवाद:। संस्कारदोषं परिहायाचार्य्यवचनेषु पर्य्यालोचितेषु किरणमालिन्युदिते तिमिर इव तिरोधत्त इति प्रत्ययवशात् कानिचित्तान्यत्रोद्ध्रियन्ते।

प्रथमन्तावदिदं विवेच्यम् ;—द्वितीयाध्यायादेव योगोपदेशारम्भ:। आरम्भे पुनर्ज्ञानयोग: कर्म्मयोग एवोपक्रान्त:, न तु भक्तियोग:, अतो योगत्रयस्यान्यय एवाभिप्रेतोऽस्मिन् शास्त्र इत्यप्रतिपन्नम्। उपक्रान्त एव भक्तियोग: "युक्त आसीत मत्पर:" (२।६१) इति वचनात्। केवलेनैकेन विशेषणेन भक्तियोग: प्रक्रान्त इति कथनं न साहसमिति तत्त्वपर्य्यालोचनात: प्रतिभास्यते। तच्छब्देन परोक्षम्, त्वमहंशब्देनापरोक्षं ब्रह्मोपदिश्यते। "ईश्वर: सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति। भ्रामयन् सर्व्वभूतानि यन्त्रारूढानि मायया॥ तमेव शरणं गच्छ सर्व्वभावेन भारत। तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्॥" (१८।६१।६२) इत्यत्र तच्छब्देन परोक्षं ब्रह्म निर्द्दिष्टम्। "समावेश-

यमि सर्वं जगत्" (म, प, ४४अ, २६श्लो) इत्युक्तदिशोपदेष्टरि निखिलं जगत् तदन्तर्यामिनञ्च दृष्ट्वाऽपरोक्षब्रह्मवाचकेन त्वंशब्देनार्जुनः स्तौति, "त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम्। वेत्तासि वेद्यञ्च परञ्च धाम त्वया ततं विश्वमनन्तरूप॥" (११।३८) "पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्। न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥" (११।४३) इति। आत्मनि तमन्तर्यामिणं नार्जुनोऽपश्यत् किन्तु स्वयमाचार्य्यः, योगेन तुरीयब्रह्मगोचरे तदा तस्य स्थितत्वात्। अहंशब्देनापरोक्षब्रह्मोपदेशो दृश्यते सकलभक्तिशास्त्रशिरोमणिश्रीमद्भागवतोपसंहारे,—"अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्। एवं समीक्ष्यचात्मानमात्मन्याधाय निष्कले॥ दंशन्तं तक्षकं पादे लेलिहानं विषाननैः। न द्रक्ष्यसि शरीरञ्च विश्वञ्च पृथगात्मनः॥" (भा, १२स्क, ५अ, ११।१२श्लो) इति। अस्त्येवाप्यपरोक्षज्ञानोपदेशोऽस्मिन् शास्त्रे, तद्यथा, "सर्व्वभूतस्थमात्मानं सर्व्वभूतानि चात्मनि। ईक्षते योगयुक्तात्मा सर्व्वत्र समदर्शनः॥ यो मां पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥" (६।२९।३०) इति। अत्रेदं विचार्य्यम्—ज्ञानयोगाश्रयेण योगी प्रथमतः आत्मनि केवलं सर्व्वभूतानि सर्व्वभूतेषु चात्मानं केवलं पश्यति। एवमात्मैक्यं सर्व्वभूतैरनुभूय तुरीये ब्रह्मणि विश्वकर्त्तर्य्यहंशब्दवाच्ये सर्व्वं पश्यति सर्व्वत्र तदन्तर्यामिणञ्च पश्यति। "वासुदेवः सर्व्वमिति स महात्मा सुदुर्लभः" (७।१९) इत्युक्तिः पूर्व्वापरसम्बन्धं दर्शयति। कोऽयं पूर्व्वापरसम्बन्धः? प्रथमन्तावत् परोक्षशब्दवाचिना यत् निर्द्दिष्टम् "ईश्वरः सर्व्वभूतानां हृद्देशे तिष्ठती"ति तत् वासुदेवशब्देन परामृशति, यतः "सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः।" (भा, ४स्क, ३अ, २३श्लो) इति विशुद्धेऽन्तःकरणे प्रकाशमानः परमात्मैव वासुदेवशब्देनोच्यते। केवलं हृद्यधिष्ठितमीश्वरं नियन्तारं दृष्ट्वा न कृतार्थता, स सर्व्वं जगच्च जीवञ्चात्मन्यन्तर्भूय वर्त्तमान इति प्रत्यक्षीकर्त्तव्यम्। अतः सर्व्वमिति पदेन "यो मां

पश्यति सर्व्वत्र सर्व्वञ्च मयि पश्यति" इति परामृष्टम्। न च वक्तव्य-मेतद्वचनेनाचार्य्य आत्मानमुपास्यत्वेनोपस्थापयति, तथा सति भागवते नैषोक्तिः स्यात्, "अहं यूयमसावार्य्य इमे च द्वारकौकसः। सर्व्वेऽप्येवं यदुश्रेष्ठ विमृश्याः सचराचरम्॥ आत्मा ह्येकः स्वयंज्योतिर्नित्योऽन्यो निर्गुणो गुणैः। आत्मसृष्टैस्तत्कृतेषु भूतेषु बहुधेयते॥ खं वायुर्ज्योति-रापो भूस्तत्कृतेषु यथाशयम्। आविस्तिरोऽल्पभूर्य्येकः नानात्वं यात्य-सावपि॥" (भा, १०स्क, ८५अ, २३—२५श्लो) इति। किं बहुना, तुरीयब्रह्मगोचरे विद्यमानस्यैव भक्तिः सिध्यति। तत्रेश्वरं बहिर्दर्शने त्वंशब्देन, अस्मदर्शनेऽहंशब्देन भक्तो निर्द्दिशति। परोक्षदर्शने भक्ति-र्गौणी, अपरोक्षदर्शने मुख्येति ज्ञेयम्। अस्मिन् शास्त्रे मुख्यैव सा, अतएवापरोक्षब्रह्मवाचकेनाहंशब्देन भजनीयः सर्व्वत्र निर्द्दिष्टः। "स च परमात्मा हरिरस्मदर्थो बोध्यः" इति वैष्णवसिद्धान्तो नातो भिद्यते।

एवं सिद्धो द्वितीयाध्याये भक्तेरुपन्यासः. अधुनाध्यायान्तरेषु विविध-योगस्यान्वयनमस्ति न वेति विचार्य्यम्। तृतीयाध्याये प्रोक्तमाचार्य्येण, "मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा। निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः॥" (३।३०) इति। भाष्यकारेण श्रीमता शङ्करेणैवं व्याख्यातोऽयं श्लोकः,—"मयि वासुदेवे परमेश्वरे सर्व्वज्ञे सर्व्वाणि कर्म्माणि सन्न्यस्य अध्यात्मचेतसा विवेकबुद्ध्या अहं कर्त्ता ईश्वराय भृत्यवत् करोमीत्यनया बुद्ध्या, किञ्च निराशीः त्यक्ताशीः निर्म्ममो ममभावश्च निर्गतो यस्य तव स त्वं निर्म्ममो भूत्वा युध्यस्व, विगतज्वरः विगतसन्तापो विगतशोकः सन्" इति। अत्र भक्तिज्ञान-कर्म्मणां त्रयाणामेकत्र सम्मिलनमेव दृश्यते। न तु वक्तव्यं नात्राचार्य्यस्य निर्बन्ध आसीत्। चेन्न स्यात् नैवं स वोचत्—"ये मे मतमिदं नित्य-मनुतिष्ठन्ति मानवाः। श्रद्धावन्तोऽनुसूयन्तो मुच्यन्ते तेऽपि कर्म्मभिः॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्व्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः॥" (३।३१।३२) इति। ननूक्तं तेन "यस्त्वात्मरति-

रेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन। न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः॥" (३।१७।१८) इति। अतो "ये मे मतम्" इत्युक्तिरविद्वद्विषयैव। यदि तथैव स्यात्, नोच्येताचार्य्येण ह्यधिष्ठितेश्वरनियमनानुसरणवशाद्योगिनः कर्म्मण्यकर्म्म (४।१८) पश्यतैवम्, "तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर। असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः॥" (३।१९) इति। न खलु वक्तव्यमर्ज्जुनस्याविद्वत्त्वं दृष्ट्वा "तस्मादसक्तः" इत्याचार्य्येणोक्तम, तथा सति जनकादीनां तत्त्वदर्शिनामात्मनश्च दृष्टान्तो न तेनोपन्यस्येत। लोकसंग्रहार्थमेवायमुपन्यासः, न स पुनरवश्यकर्त्तव्यत्वेन विदुषामनुसरणीयः, यथाह स्वयं भगवान् श्रीमद्भागवते "स्वयं निःश्रेयसं विद्वान् न वक्त्यज्ञाय कर्म्म हि। न राति रोगिणोऽपथ्यं वाञ्छतोऽपि भिषक्तमः॥" (भा, ६स्क, ९अ, ५०श्लो) इति। विप्रतिपत्तिरियं मूले दृष्टेरभावात्। 'कर्म्म न वक्ति' इति किमिदं कर्म्म? "नैष्कर्म्यमप्यच्युतभाववर्ज्जितम्" (भा, १स्क, ५अ, १२श्लो) इति भगवत्यनर्पितमेव, अन्यथा तस्मिन् शास्त्रे कर्म्मार्पणस्य सर्व्वप्राधान्यं न स्यात्। कोऽयं लोकसंग्रहो यस्मिन् भवतां विद्वदभिमानिनामीदृगनादरः? शृणु तावत् तं जनकवाक्येन, "अन्तवन्त इहावस्थाः विदिताः सर्व्वकर्म्मसु। नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत्॥ कस्येदमिति कस्य स्वमिति वेदवचस्तथा। नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत्॥ एतां बुद्धिं समाश्रित्य ममत्वं वर्ज्जितं मया। शृणु बुद्धिञ्च यां ज्ञात्वा सर्व्वत्र विषयो मम॥ नाहमात्मार्थमिच्छामि गन्धान् घ्राणगतानपि। तस्मान्मे निर्ज्जिता भूमिर्वशे तिष्ठति सर्व्वदा॥" इत्यारभ्य सर्व्वेषामिन्द्रियाणां तद्विषयाणाञ्चात्मवशे स्थितिमुक्त्वैवमुपसंहृतवान्, "देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह। इत्यर्थं सर्व्व एवेति समारम्भा भवन्ति वै॥" (अ, गी, ३२अ, १५—२४श्लो) इति लोकसंग्रहस्तस्य परात्मतैव। न खलु परात्मता विदुषामनादरणीया, तथा सति तेषां विद्वत्त्वं हीयेत।

"शिवाय लोकस्य भवाय भूतये य उत्तमश्लोकपरायणा जनाः । जीवन्ति नात्मार्थमसौ पराश्रयं मुमोच निर्व्विद्य कथं कलेवरम् ॥" (भा, १स्क, ४अ, १२श्लो) इति भगवत्परायणानां परार्थजीवनधारण-वर्णनं प्रसभं कस्य न मनो हरति ?

चतुर्थाध्याये पुनः, "वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा पूता मद्भावमागताः ॥" (४।१०) इत्यत्र भक्तिज्ञानं, तपःशब्देन वाङ्मनःकायशुद्धिकरं कर्म्म चैकत्र । ज्ञानमेव तप इति व्याख्यानं न रुचिरम् । "यज्ञदानतपःकर्म्म न त्याज्यं कार्य्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥" (१८।५) इत्यत्र स्वय-माचार्य्येण कर्म्मान्तःपातितया तपःशब्दग्रहणात् । तत्तु तथैव यथा सप्तदशे, "देवद्विजगुरुप्राज्ञपूजनं शौचमार्ज्जवम् । ब्रह्मचर्य्यमहिंसा च शारीरं तप उच्यते ॥ अनुद्वेगकरं वाक्यं सत्यं प्रियहितञ्च यत् । स्वाध्यायाभ्यसनञ्चैव वाङ्मयं तप उच्यते ॥ मनःप्रसादः सौम्यत्वं मौन-मात्मविनिग्रहः । भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥" (१७।१४—१६) इति । अतएव श्रीमत्स्वामिना द्वन्द्वैकवद्भावेन यद्व्याख्यानं कृतं तदेव वयमनुमोदयामः । नन्वस्मिन्नध्याये "ब्रह्मार्पणं ब्रह्म हविः" (४।२४) इत्यादिना द्रव्यमययज्ञस्य ब्रह्मप्रापकतां संसाध्य "श्रेयान् द्रव्य-मयाद्यज्ञात् ज्ञानयज्ञः परन्तप । सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परि-समाप्यते ॥" (४।३३) इति यदुक्तं तेन द्रव्यमययज्ञस्य परिसमाप्तिः प्रदर्शिता, अतः निखिलकर्म्मत्याग एवाभिप्रेत आचार्य्येण । नैवम्, वैदिकयज्ञानुष्ठानस्य परिसमाप्तिरनेन साधिताचार्य्येण, अन्यथा अध्या-यान्ते न तेनोचेरत, "योगसन्न्यस्तकर्म्माणं ज्ञानसञ्छिन्नसंशयम् । आत्म-वन्तं न कर्म्माणि निबध्नन्ति धनञ्जय ॥ तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञाना-सिनात्मनः । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥" (४।४१।४२) इति । अत्राचार्य्यस्य निर्ब्बन्ध एव दृश्यते, अन्यथार्ज्जुनपरिप्रश्नोत्तरदान-काले न स एवमुचेरत, "सन्न्यासः कर्म्मयोगश्च निःश्रेयसकरावुभौ । तयोस्तु कर्म्मसन्न्यासात् कर्म्मयोगो विशिष्यते ॥" (५।२) इति ।

पञ्चमाध्याये तावत्, "भोक्तारं यज्ञतपसां सर्व्वलोकमहेश्वरम्। सुहृदं सर्व्वभूतानां ज्ञात्वा मां शान्तिमृच्छति॥" (५।२८) इत्यन्तिमः श्लोकः कर्म्मज्ञानभक्तीनामेकत्वं सुव्यक्तं दर्शयति। 'भोक्तारं यज्ञतपसाम्' इत्यत्र कर्म्म, "यज्ञानां तपसाञ्चैव मम भक्तैः समर्पितानां यद्दृच्छया भोक्तारं पालकम्" इति श्रीमच्छ्रीधरः; "ज्ञात्वा" इति ज्ञानम्; "सर्व्वलोकमहेश्वरं सुहृदं सर्व्वभूतानां माम्" इति भजनीयोल्लेखेन भक्तिः। "कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि। योगिनः कर्म्म कुर्व्वन्ति सङ्गं त्यक्त्वात्मशुद्धये॥" (५।११) इत्यासक्तित्यागेन कर्म्मकरणं "सर्व्वकर्म्माणि मनसा सन्न्यस्यास्ते सुखं वशी" (५।१३) इत्यनेन न प्रतिषिध्यते, यदि तथैव स्यात् षष्ठाध्यायस्यारम्भे "अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः। स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः॥ यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव। न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन॥" (६।१।२) इति न तेन निर्व्वन्धेनोच्येत। "नैव कुर्व्वन्न कारयन्" (५।१३) इति वचनन्तु "नैव किञ्चित्करोमीति" (५।८) इति "इन्द्रियाणीन्द्रियार्थेषु वर्त्तन्ते" (५।९) इति युक्त्या युक्ततमम्। श्रीमच्छ्रीधरस्वामिनाध्यायार्थसंग्रह एवं कृतः— "विकल्पशङ्कापोहेन येनैवं योगसांख्ययोः। समुच्चयः क्रमेणोक्तः सर्व्वज्ञं नौमि तं गुरुम्॥" इति।

षष्ठाध्याये पुनरन्तिमश्लोकद्वये 'तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः। कर्म्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्ज्जुन॥ योगिनामपि सर्व्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥" (६।४६।४७) इत्यत्र योगं ब्रह्मसंस्पर्शसुखप्रदं सर्व्वत्र भगवद्दर्शनरूपं प्रशंस्य तद्गतचित्तेन तस्य भजनं संसेवनमुपासनं सर्व्वोत्तममिति प्रतिपादयति। अतः पूर्व्वसूत्रं योगत्रयमिलनं न छिद्यते। "प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः। मनः संयम्य मच्चित्तो युक्त आसीत मत्परः॥" (६।१४) इत्यत्र तत्तु सुव्यक्तम्।

सप्तमाध्याये तत्परिसमाप्तेः प्रागपि "जरामरणमोक्षाय मामाश्रित्य

यतन्ति ये। ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म्म चाखिलम ॥" (७।२८) इति। इत्यधिष्ठितमीश्वरमन्तर्यामिणमाश्रित्य यतमानस्य परब्रह्मज्ञानमात्मविषयज्ञानं निखिलं करणीयं कर्म्म च जानातीति स्पष्टं योगत्रयान्वयोऽत्र। अस्मिन्नध्याये योगभक्त्योरनुसरणरीतिः सम्यक् स्वीकृत्यैवोक्ताचार्य्येण ; तद्यथा—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मामिकाम्। जीवभूतां महाबाहो ययेदं धार्य्यते जगत् ॥ एतद्योनीनि भूतानि सर्व्वाणीत्युपधारय। अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय। मयि सर्व्वमिदं प्रोक्तं सूत्रे मणिगणा इव ॥" (७।४—७) इति ; "मया ततमिदं सर्व्वं जगदव्यक्तमूर्त्तिना। मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थितः ॥ न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्। भूतभृन्न च भूतस्थः ममात्मा भूतभावनः ॥" (९।४।५) इति च।

अष्टमाध्याये "तस्मात् सर्व्वेषु कालेषु मामनुस्मर युध्य च। मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम ॥" (८।७) इत्यत्र भगवदनुस्मरणं, तस्मिन् मनोबुद्धिसमर्पणं, स्वधर्म्मानुसरणञ्च योगत्रयस्यैकत्र सन्निवेशः प्रदर्श्यते। मनोबुद्धिसमर्पणेनात्र कर्म्मसमर्पणवत् ज्ञानसमर्पणं बोध्यम्। तेन च ज्ञानाभिमाननिरसनादसंगयित्वम्।

नवमाध्यायेऽन्तिमे श्लोके "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥" (९।३४) इत्यत्र मन्मना इति विशेषणेन ज्ञानं, मद्भक्त इति विशेषणेन भक्तिः, मद्याजीति विशेषणेन कर्म्म। श्लोकोऽयमष्टादशे पुनरुपसंहारभूतो वक्ष्यते।

दशमे पुनः "अहं सर्व्वस्य प्रभवो मत्तः सर्व्वं प्रवर्त्तते। इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम्। ददामि बुद्धियोगं तं येन मामु-

पर्य्यान्ति ते॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्म-भावस्थो ज्ञानदीपेन भास्वता॥" (१०।८—११) इति ज्ञानकर्म्मभक्ति-भगवदनुकम्पादीनां यथाक्रममेकत्र सन्निवेशः।

एकादशे तावत् "मत्कर्म्मकृत् मत्परमो मद्भक्तः सङ्गवर्ज्जितः। निर्व्वैरः सर्व्वभूतेषु यः स मामेति पाण्डव॥" (११।५५) इति चरमे श्लोके यद्यपि ज्ञानं न विस्पष्टं विन्यस्तं तथापि पूर्व्ववर्त्तिश्लोके "ज्ञातुं द्रष्टुञ्च तत्त्वेन" (११।५४) इति ज्ञानस्य सन्निवेशात् तदत्रानुवर्त्तते।

द्वादशे "ये तु सर्व्वाणि कर्म्माणि मयि सन्न्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते॥ तेषामहं समुद्धर्त्ता मृत्युसंसार-सागरात्। भवामि न चिरात् पार्थ मय्यावेशितचेतसाम्॥ मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः॥" (१२।६—८) इत्येतेषु कर्म्मज्ञानभक्तिसन्निवेशः सुस्पष्टतरः।

त्रयोदशे प्रकृतिपुरुषविवेकविषये "मयि चानन्ययोगेन भक्तिरव्य-भिचारिणी। विविक्तदेशसेवित्वमरतिर्जनसंसदि। अध्यात्मज्ञाननि-त्यत्वं तत्त्वज्ञानार्थदर्शनम्॥" (१३।१०।११) इत्यादिभिस्त्रयाणामविसं-वादितैव प्रतिभाति। 'अरतिर्जनसंसदि' इत्यनेन नैष्कर्म्यमेव बुद्धौ भासते, किन्तु तत्त्वतः 'विविक्तदेशसेवित्वम्' इत्यनेन भगवद्भजनक्रियां स निर्व्विघ्नेन निर्व्वहेदित्यभिप्रायेण जनसङ्गवर्ज्जनं साधकस्य व्यज्यत इति न सर्व्वकर्म्मपरिहारः।

चतुर्द्दशे गुणत्रयविभागविषयेऽध्याये "माञ्च योऽव्यभिचारेण भक्ति-योगेन सेवते। स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते॥" (१४।२६) इत्यत्र यद्यपि गुणातीतत्वसाधने भक्तेरेव माहात्म्यं कीर्त्तितं तस्यामप-रोक्षब्रह्मदर्शनप्राधान्यात्, तथापि तां भजनीयविषयकज्ञानं भजनरूपं कर्म्म नित्यमनुबध्नातीति तयोस्तया सम्बन्धोऽपरिहार्य्य एव।

पञ्चदशे "यो मामेवमसम्मूढ़ो जानाति पुरुषोत्तमम्। स सर्व्व-विद्भजति मां सर्व्वभावेन भारत॥" (१५।१९) इत्यत्र 'जानाति' 'सर्व्व-वित्' इत्यनेन ज्ञानं, सर्व्वभावेन' इत्यनेन भक्तिः, 'भजति' इत्यनेन

कर्म्म व्यज्यते । न केवलं श्रवणकीर्त्तनादिकं भजनान्तःपाति, श्राज्ञापालनञ्च, तद्यथा हरिभक्तिविलासोद्धृतविष्णुधर्म्मोत्तरवचने, "यदुक्तवादिकं कर्म्म तत्त्वया प्रेरितो हरे । करिष्यामि त्वया श्रेयमिति विज्ञापनं मम ॥ प्रातः प्रबोधितो विष्णो हृषीकेशेन यत्त्वया । यद्यत् कारयसीशान तत्करोमि तवाज्ञया ॥ त्रैलोक्यचैतन्यमयादिदेव श्रीनाथ विष्णो भवदाज्ञयैव । प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्त्तयिष्ये ॥ संसारयात्रामनुवर्त्तमानं त्वदाज्ञया श्रीनृहरेऽन्तरात्मन् । स्पर्द्धातिरस्कारकलिप्रमादभयानि मा माभिभवन्तु भूमन् ॥ जानामि धर्म्मं न च मे प्रवृत्तिर्जानाम्यधर्म्मं न च मे निवृत्तिः । त्वया हृषीकेश हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि ॥" इति । भविष्यत्सामीप्येऽत्र वर्त्तमाना । "ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति" (१८।६१), "तमेव शरणं गच्छ सर्व्वभावेन भारत:" (१८।६२) इत्युक्तदिशेयं विज्ञापना ।

षोड़शे देवासुरसम्पद्विभागविषये यद्यपि योगत्रयं नाधिकृतं, तथापि "अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः" (१६।१) इत्यादिषु तद्व्यज्यते । एवं सप्तदशे श्रद्धाविभागविषये यदुक्तं तदालोचनात: योगत्रयानुकूलविषयाणामुक्तिरत्रेति सुधियो विभावयन्ति । श्रीमद्यामुनमुन्यनुसारिणा श्रीमद्रामानुजेन कृतः षोड़शाध्यायार्थसंग्रहो यथा "देवासुरविभागोक्तिपूर्व्विका शास्त्रवश्यता । तत्त्वानुष्ठानविज्ञानस्थेम्ने षोड़श उच्यते ॥" इति । श्रीमता स्वामिना कृतोऽर्थसंग्रहः सप्तदशस्य यथा, "रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः । तत्त्वज्ञानेऽधिकारी स्यादिति सप्तदशे स्थितम् ॥" इति ।

अष्टादशे सर्व्वार्थोपसंहारे योगत्रयान्वयो व्यक्ततर एव । प्रथमस्तावत् कर्म्मत्यागविषये परमतमुद्धाव्य स्वमतमेवमाहाचार्य्यः ;— "त्याज्यं दोषवदित्येके कर्म्म प्राहुर्मनीषिणः । यज्ञदानतपःकर्म्म न त्याज्यमिति चापरे ॥ निश्चयं शृणु मे तत्र त्यागे भरतसत्तम । त्यागो हि पुरुषव्याघ्र त्रिविधः परिकीर्त्तितः ॥ यज्ञदानतपःकर्म्म न त्याज्यं

कार्य्यमेव तत् । यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ एतान्यपि तु कर्म्माणि सङ्गं त्यक्त्वा फलानि च । कर्त्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्त्तितः ॥" ( १८।३—७ ) इति । कोऽयं त्यागोत्यपेक्षयाह "न हि देहभृता शक्यं त्यक्तुं कर्म्माण्यशेषतः । यस्तु कर्म्मफलत्यागी स त्यागीत्यभिधीयते ॥" (१८।११) इति । यत्र च तेन नैष्कर्म्यसिद्धिरुच्यते तत्रापि त्रयाणां योगानामन्वय एवाभिहित इति श्लोकैरेतैर्व्यक्ततरं प्रतिभाति ;—"असक्तबुद्धिः सर्व्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाधिगच्छति ॥ सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे । समासेनैव कौन्तेय निष्ठा-ज्ञानस्य या परा ॥ बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च । शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः । ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ अह-ङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् । विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्व्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्त-रम् ॥" (१८।४९—५५) इति । न पुनर्विप्रचेटितव्यम्— ज्ञानयोग-स्यैवात्र प्राधान्यं, कर्म्मयोगस्तु परित्यक्त एव, भक्तियोगेन पुनर्ज्ञानपरि-पुष्टिरेवेति । कोऽयं कर्म्मयोगः, ज्ञानयोगो, भक्तियोगो वा, यमधि-कृत्येदृग्विरोधः ? न तेष्वेकोऽप्युपेय उपाय एव ते । तद्यथा भागवते उद्धवं प्रत्याहाचार्य्यः, "योगास्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया । ज्ञानं कर्म्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥" (११स्क, २०अ, ६श्लो) इति । उपेयमेकं परं ब्रह्मैव, यन्निर्द्दिष्टपथमतिक्रम्य न कोऽपि तत्प्राप्तुं शक्यते । कोऽयं निर्द्दिष्टः पन्थाः ? तत्प्रदत्तस्वभावः । सुतरां तत्प्राप्त्युपायस्य त्रित्वं जीवस्वभावानुसार्य्येव । यथैवेश्वरे "स्वाभा-विकी ज्ञानबलक्रिया च" (श्वे, उ, ६।८) अस्ति, तथैव जीवेऽपि । तत-

स्तदुपयोगी ज्ञानयोग: कर्म्मयोगो नियतानुबन्धस्तस्मिन् स्यादेव। भक्तिरपि तस्मिन् परस्य रसत्वात्। तद्यथा भागवते, "देवानां गुण-कर्म्माणामानुश्रविककर्म्मणाम्। सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या। अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी॥" (३स्क, २५अ, ३२श्लो) इति। "आर्त्तो जिज्ञासुः" (७।१६) इत्यत्र भगवन्तं ज्ञातुमभिलाषोऽभिलाषमयं हृदयं भक्तिं च दर्शयति, अतएवोपसंहृतवानाचार्य्यः "भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः" इति। योगत्रयैक्यरूपं स्वाभाविकं पन्थानमेवाचार्य्यो भूयो भूयोऽतः सर्व्वोपदिदेश, तद्विरोधेन व्याचक्षाणानां व्याख्यातृणां व्याख्यानानि न वयं बहु मन्यामहे। अत्र ज्ञानपथावलम्बिनो ज्ञानमेव प्राधान्येन वर्णयन्ति, तद्यथा श्रीमच्छङ्करः—"नैष्कर्म्यसिद्धिं निर्गतानि कर्म्माणि यस्मात् निष्क्रियात्मब्रह्मसम्बोधात् स निष्कर्म्मा तस्य भावो नैष्कर्म्यं नैष्कर्म्यञ्च तत् सिद्धिश्च सा नैष्कर्म्यसिद्धिः नैष्कर्म्यस्य वा सिद्धिः निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निष्पत्तिस्तां नैष्कर्म्यसिद्धिं परमां प्रकृष्टां कर्म्मजसिद्धिविलक्षणां सद्योमुक्त्यवस्थानरूपां सन्न्यासेन सम्यग्दर्शनेन तत्पूर्व्वकेन वा सर्व्वकर्म्मसन्न्यासेनाधिगच्छति प्राप्नोति" इति। "कर्म्म कुर्व्वन्नपि परमां नैष्कर्म्यसिद्धिम् अधिगच्छतीति परमां ध्याननिष्ठां ज्ञानयोगस्यापि फलभूतामधिगच्छति" इति श्रीमद्रामानुजः। "यद्यपि सङ्गफलयोस्त्यागेन कर्म्मानुष्ठानमपि नैष्कर्म्यमेव कर्त्तृत्वाभिनिवेशाभावात्……तथापि……सन्न्यासेन परमनैष्कर्म्यसिद्धिं 'सर्व्वकर्म्माणि मनसा सन्न्यस्यास्ते सुखं वशी' इत्येवंलक्षणां पारमहंस्यचर्य्यामाप्नोति" इति श्रीमच्छ्रीधरः। "स्वात्मानन्दास्वादविक्षेपकाणां कर्म्मणां सन्न्यासेन स्वरूपतस्त्यागेन परमां नैष्कर्म्यलक्षणां सिद्धिमधिगच्छति" इति श्रीमद्बलदेवः। स तु व्याख्यानारम्भ आह, "ज्ञानगर्भया कर्म्मनिष्ठयानुभूतस्वस्वरूपस्ततः कर्म्मनिष्ठां स्वरूपतस्त्यजेत्" इति। "नैष्कर्म्यसिद्धिं निष्कर्म्म ब्रह्म तद्विषयं विचारपरिनिष्पन्नं ज्ञानं नैष्कर्म्यं तद्रूपां सिद्धिं परमां कर्म्मजाया अपरमसिद्धेः फलभूताम् अधिगच्छति साधनपरिपा-

केन प्राप्नोति" इति श्रीमन्मधुसूदनः। 'भक्त्या मामभिजानाती'त्यत्र "भक्त्या जानातीति चेत् नाभिज्ञया साहाय्यात्।१५।" इति शाण्डिल्यः। "नात्र ज्ञानानन्तरप्रवेशक्रिये भिन्ने विवक्षिते ज्ञात्वा विशते तदनन्तरमिति, किन्तर्हि फलान्तराभावात् ज्ञानमात्रमेव" इति श्रीमच्छङ्करः। "मां तत्त्वतो ज्ञात्वा तदनन्तरं तत्त्वज्ञानानन्तरं ततो भक्तितो मां विशते प्रविशति तत्त्वतः स्वरूपस्वभावगुणविभूतिदर्शनोत्तरकालभाविन्यानवधिकातिशयभक्त्या मां प्राप्नोति" इति श्रीमद्रामानुजः। "तदनन्तरं तस्य ज्ञानस्योपरमे सति मां विशते परमात्मस्वरूपो भवति" इति श्रीमच्छ्रीधरः। "विशते अज्ञानतत्कार्य्यनिवृत्तौ सर्व्वोपाधिशून्यतया मद्रूप एव भवति तदनन्तरं न्यप्रारब्धकर्म्मभोगेन देहपातानन्तरं, न तु ज्ञानानन्तरमेव" इति श्रीमन्मधुसूदनः। एवं श्रीमच्छङ्करस्तदनुयायिनश्च ज्ञानं, श्रीमद्रामानुजः ध्यानलक्षणां भक्तिम्, वाक्यान्तरेण तामेव श्रीमद्बलदेवः, श्रीमच्छाण्डिल्यश्च परानुरागलक्षणां भक्तिमुपायत्वेन गृह्णन्ति। कर्म्मात्र न केनाप्यनुमोदितम्, यद्यपि श्रीमद्रामानुजीये व्याख्याने ध्यानलक्षणं तद्दृश्यत एव। ज्ञानञ्च भक्तिश्च चेत् ते ब्रह्मप्राप्तौ सर्व्वैश्चोपायत्वेनागृह्णन्, कथमन्यदुपायभूतं कर्म्माव तैरुपेक्षितमिति जिज्ञासायां संस्कारदोष एवात्र कारणमिति ब्रूमः, अन्यथा श्रीमदाचार्य्याभिप्रेतं सङ्गफलयोस्त्यागेन कर्म्मानुष्ठानं नैष्कर्म्यमिति पश्यन्तोऽपि "सर्व्वकर्म्माणि मनसा संन्यस्यास्ते सुखं वशी" (५।१३) इत्येकामुक्तिं पूर्व्वापरसङ्गतिरहितां स्वीकृत्य स्वरूपतः सर्व्वकर्म्मत्यागमेव नानुगृह्णीयुः। नैतदाचार्य्यस्याभिप्रायः, यदि स्यात्, "बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च॥ विविक्तसेवी लघ्वाशी यतवाक्कायमानसः। ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥" इत्येतैर्योगानुकूलैः सर्व्वैरनुष्ठानैः "एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे। कर्म्मजान् विद्धि तान् सर्व्वान्" (४।३२) इति न्यायात् न सोऽत्र कर्म्मानुमोदेन; नापि नवमाध्यायान्ते "मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु" (८।३४) इति श्लोकार्द्ध-

श्रीभगवानुवाच—

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥३॥**

अष्टादशे यथायथं गदन्तीचेत "मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥" (१८।६५) इति । न स केवलं ज्ञानकर्मभक्तयन्वयमवोचत्, दृश्यते च तस्य तदनुयायिनित्यानुष्ठानम्, सङ्क्षेपतो महाभारते (उ, प, ८८।८३ ष), विस्तरतस्तु श्रीमद्भागवते तद्यथा, "ब्राह्मे मुहूर्त्ते उत्थाय वार्य्युपस्पृश्य माधवः । दध्यौ प्रसन्नकरण आत्मानं तमसः परम् ॥ एकं स्वयं ज्योतिरनन्यमव्ययं स्वसंस्थया नित्यनिरस्तकल्मषम् । ब्रह्माख्यमस्योद्भवनाशहेतुभिः स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ॥ अथाप्लुतोऽम्भस्यमले यथाविधि क्रियाकलापं परिधाय वाससी । चकार सन्ध्योपगमादि सत्तमो हुतानलो ब्रह्म जजाप वाग्यतः ॥ उपस्थायार्कमुद्यन्तं तर्पयित्वात्मनः कलाः । देवान् ऋषीन् पितॄन् वृद्धान् विप्रानभ्यर्च्य चात्मवान् ॥ धेनूनां रुक्मशृङ्गीणां साध्वीनां मौक्तिकस्रजाम् । पयस्विनीनां गृष्टीनां सवत्सानां सुवाससाम् ॥ ददौ रूप्यखुराग्राणां क्षौमाजिनतिलैः सह । अलङ्कृतेभ्यो विप्रेभ्यो बद्वं बद्वं दिने दिने ॥ गोविप्रदेवतावृद्धगुरून् भूतानि सर्व्वशः । नमस्कृत्यात्मसम्भूतीर्मङ्गलानि समस्पृशत् ॥" (१०स्क, ७०अ, ४—१०श्लो) इति । स्वानुष्ठिताचारेणात्मनो मतमन्यान् ग्राहयन् पूर्णतामापादयदसौ स्वस्याचार्य्यत्वम्, इत्यलमतिविस्तरेण । गीतार्थसंग्रहः श्रीमता श्रीधरेणैवं कृतः—"भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः । सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥" इति । भक्तिपथपक्षपातिनापि श्रीमच्छ्रीधरेण पूर्व्वं योगसांख्ययोः समुच्चयमुक्तयताजानतैव योगत्रयसमन्वयः साधितो गीतार्थसंग्रहेणेति सत्यस्य महिमैतत् । अस्मिन् संग्रहश्लोके भगवद्भजनान्तर्भूततया कर्म्म वर्त्तते । १।२ ।

अर्ज्जुनपरिप्रश्नस्योत्तरमाहाचार्य्यो लोकेऽस्मिन्निति । पुरा पूर्व्वाध्याये

मया प्रोक्ता निष्ठा एकैव अस्मिन् लोके द्विविधा। कथमेकैव द्विविधा? सांख्यानाम् ज्ञाननिष्ठानां ज्ञानप्रधानचित्तवृत्तिकानां ज्ञानयोगेन, योगिनां "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" (२।१) इति क्रियायोगपराणां कर्मयोगेन एकैव द्विविधेति शेषः। 'भिन्नपुरुष-कर्त्तृकं निष्ठाद्वयं, तेन समुच्चयो भगवदभीष्टः शास्त्रार्थो न भवति' इति श्रीमच्छङ्कराभिप्रायः। निष्ठाद्वयमित्युक्तिर्न शोभते, एकस्या एव शास्त्रभेदेन भिन्नभावेन ग्रहणात्। कथमेका? निष्ठेत्येकवचनेन। "द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोः स्वातन्त्र्यानुपपत्तेः" इति श्रीमच्छ्रीधरः। "एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा न तु द्वे एव स्वतन्त्रे निष्ठे इति कथयितुं निष्ठेत्येकवचनम्। तथाच वक्ष्यति 'एकं सांख्यञ्च योगञ्च यः पश्यति स पश्यति'" (५।५) इति श्रीमन्मधुसूदनः। एवं श्रीमद्बलदेवः। "एकस्या एव निष्ठायाः प्रकारद्वयमुक्तमधिकारिभेदेन" इति श्रीमन्नीलकण्ठः। "ज्ञाननिष्ठा कर्मनिष्ठात्वेन यद् द्विविधमुक्तं, तत् खलु पूर्व्वोत्तरदशाभेदादेव" इति श्रीमद्विश्वनाथः। "विषयव्याकुलचित्तानां कर्मयोगाधिकारः, अव्याकुलचित्तानान्तु ज्ञानयोगाधिकारः" इति श्रीमद्रामानुजः। "कर्म-ण्येवाधिकारस्ते" (२।४७) इत्यादिना कर्मयोगः, "प्रजहाति यदा कामान्" (२।५५) इत्यादिना ज्ञानयोगो विहितः। एवञ्च सहसा प्रतिभाति न कोऽपि व्याख्यातृषु कर्मयोगस्यापरिहार्य्यत्वं स्वीकरोति, यदप्याचार्य्यवाक्ये तदेव परिस्फुटं सर्व्वत्रेति। अत्रेदं विवेचनीयम्—संसारिणो नियतेन्द्रियव्यापारप्रवृत्ता न जातु चित्तस्य स्थैर्य्यं रक्षितुं समर्थाः, तान् प्रति ज्ञानयोगोपदेशो व्यर्थ एव। यद्यपि तेषु "यतः प्रवृत्तिर्भूतानां येन सर्व्वमिदं ततम्। स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥" (१८।४६) इति न्यायमाश्रित्य करणीयैः कर्मभि-र्भगवद्दर्शनं भवतीति बुद्धिरुपतिष्ठते, तदा तैः कर्मयोगोऽधिकृतः, तेन च कालेऽव्याकुलचित्तता सिध्यति, ज्ञानयोगे प्रवेशश्च। येषाञ्च प्रारम्भ एव शमप्रधानं चित्तं तेषां ज्ञानयोगाधिकारश्चित्तशुद्ध्यर्थानुष्ठितकर्म्मा-

न कर्म्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥४॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्म्मकृत् ।
कार्य्यते ह्यवशः कर्म्म सर्व्वः प्रकृतिजैर्गुणैः ॥५॥

नपेक्ष्य एव । एवं स्थिते पूर्व्वतनव्याख्यातॄणां व्याख्यैव सम्... ...नेति प्रतिभाति । स्यादेवं यदि सम्यगनुष्ठानवशादेकस्यान्यस्मिन् प्रवेशो न स्यात् । कर्म्मयोगाज्ज्ञानयोगे प्रवेशः प्रारम्भे चेज्ज्ञानयोगिनः कर्म्म-वैमुख्यं जनयेत्, अचिरादेव स भगवत्प्रेरणया दुष्करकर्म्मसाधने तं प्रवर्त्तयेत्, अन्यथा अर्व्वाचामपि श्रीमच्छङ्करादीनां जीवहिताय महान् प्रयासो नोपतिष्ठेत, येन च तेषामकाले शरीरपातोऽभवत् । नापि कर्म्मयोगिनां ज्ञानवैमुख्यं सम्भवति, भगवदर्च्चनरतानां तेषामुत्तरोत्तर-भगवद्विषयकज्ञानस्फूर्त्तेरपरिहार्य्यत्वात् । "एकमप्यास्थितः सम्यगुभयो-र्विन्दते फलम्" (५।४) इत्याचार्य्यस्योक्तौ तत्त्वमिदं स्फुटं प्रतिभाति । निष्ठाया एकत्वान्नास्त्यत्र व्यामिश्रवाक्यस्यावकाश इत्याचार्य्यस्या-शयः । ३ ।

"ज्यायसी चेत् कर्म्मणस्ते मता बुद्धिः" इति प्रश्नेन भासमानां ज्ञाननिष्ठैव श्रेष्ठेति विप्रतिपत्तिं निरसितुं, "तदेकं वद निश्चित्य" इत्यस्याश्चाकाङ्क्षाया निवृत्तिं साधयितुमाहाचार्य्यो न कर्म्मणामिति । पुरुषः कर्म्मणामनारम्भादननुष्ठानात् नैष्कर्म्यं कर्म्मशून्यतां सर्व्वकर्म्म-त्यागरूपां ज्ञाननिष्ठां निष्क्रियात्मस्वरूपेण स्थितिं नाश्नुते न प्राप्नोति । न च सन्न्यसनादेव निखिलकर्म्मपरित्यागादेव सिद्धिं नैष्कर्म्यलक्षणां ज्ञाननिष्ठां समधिगच्छति प्राप्नोति । विप्रतिपत्तिरियं न केवलमर्ज्जु-नस्य तात्कालिकानामपरेषामप्यासीदिति तन्निरसनायैवाचार्य्यस्येय-मुक्तिः । ४ ।

ज्ञाननिष्ठायाः श्रेष्ठत्वे सिद्धेऽपि कथमेवमाहाचार्य्य इति तत्कारणं दर्शयितुं कथयति न हीति । कश्चित् ज्ञानी अज्ञानी वा जातु कदा-

कर्म्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥६॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्ज्जुन ।
कर्म्मेन्द्रियैः कर्म्मयोगमसक्तः स विशिष्यते ॥७॥

चित् क्षणमपि अकर्म्मकृत् कर्म्माकुर्व्वाणः न हि तिष्ठति। कथम् ? सर्व्वो जनः अवशः पराधीनः सन् प्रकृतिजैर्गुणैः सत्त्वरजस्तमोभिः कर्म्म कार्य्यते। ननु ज्ञानिनां गुणैरविचाल्यमानानां नैवमवशभावेन कर्म्मानुष्ठानं सम्भवति ; अतो ज्ञानिनामज्ञानिनां कुतः समत्वमिति जिज्ञासानिवृत्तये स्वयमेवाचार्य्येणोपरिष्टात् कर्म्मणोऽपरिहार्य्यत्वादुभयोः समत्वेऽपि किन्तयोः महत्पार्थक्यं दर्शयति "कर्म्मेन्द्रियाणि संयम्य" (३।६), "यस्त्विन्द्रियाणि मनसा" (३।७) इत्येताभ्याम् । ५ ।

कर्म्मेन्द्रियाणीति। कर्म्मेन्द्रियाणि संयम्य यः मनसा इन्द्रियार्थान् स्मरन् आस्ते विमूढात्मा स मिथ्याचारः मृषाचारः कपटाचारः पापाचारः दम्भार्थमेवमनुष्ठानपरायणत्वात् दाम्भिक उच्यते । ६ ।

यस्त्विति। हे अर्ज्जुन, यस्तु मनसा इन्द्रियाणि नियम्य असक्तः सन् कर्म्मेन्द्रियैः कर्म्मयोगम् आरभते स विशिष्यते, "असम्भाव्यमानप्रमादत्वेन ज्ञाननिष्ठादपि पुरुषाद्विशिष्यते" इति श्रीमद्रामानुजः, "इतरस्मान्मिथ्याचारात्" इति श्रीमच्छङ्करस्तदनुयायिनश्च। "योगः कर्म्मसु कौशलम्" (२।५०) इत्यादिभिः सङ्गफलयोस्त्यागेन कर्म्मकरणस्यास्मिन् शास्त्रे सर्व्वत्र सर्व्वास्ववस्थासु विहितत्वात्, अपि च "नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते। मोहात् तस्य परित्यागस्तामसः परिकीर्त्तितः ॥" (१८।७) इत्याचार्य्यस्य स्वमुखे सर्व्वकर्म्मत्यागस्य निन्दाश्रवणात् श्रीमद्रामानुजकृतव्याख्यानमेव वयमनुमोदयामः । ७ ।

नियतं कुरु कर्म्म त्वं कर्म्म ज्यायो ह्यकर्म्मणः ।
शरीरयात्रापि च ते न प्रसिध्येदकर्म्मणः ॥८॥

"कर्म्मणो बुद्धिर्ज्यायसी" इत्यर्जुनस्य प्रतिपत्तिर्भ्रान्तिविजृम्भिता, तयोरेकत्वादिति प्रतिपाद्य सम्प्रति कर्म्माकरणात् कर्म्मकरणस्य ज्याय-स्त्वमाहाचार्य्यो नियतमिति । त्वं नियतं नित्यं विहितं कर्म कुरु । कथम् ? अकर्म्मणः कर्म्माकरणात् कर्म्म ज्यायः प्रशस्यतरम् । कथं वा तस्य ज्यायस्त्वम ? अकर्म्मणः कर्म्माकुर्व्वाणस्य ते शरीरयात्राऽपि च न प्रसिध्येत् न सिद्धा भवेत् । पद्यमिदं श्रीमद्रामानुज एवं व्याचष्टे "नियतं व्याप्तम् । प्रकृतिसंसृष्टेन हि व्याप्तं कर्म्म, प्रकृतिसंसृष्टम् अनादिवासनया नियतत्वेन । सशकत्वादसम्भावितप्रमादत्वाच्च कर्म्मणः, कर्म्मैव कुरु । अकर्म्मणो हि ज्ञाननिष्ठाया अपि कर्म्मैव ज्यायः । 'नैष्कर्म्यं पुरुषोऽश्नुते' इति प्रक्रमात्, अकर्म्मशब्देन ज्ञाननिष्ठाधिकारि-णोऽप्यनभ्यस्तपूर्व्वतया चानियतत्वेन दुःशकत्वात् सप्रमादत्वाच्च, ज्ञान-निष्ठायाः कर्म्मनिष्ठैव ज्यायसी । कर्म्मणि क्रियमाणे त्वात्मयाथात्म्य-ज्ञानेनात्मनोऽकर्त्तृत्वानुसन्धानमनन्तरमेव वक्ष्यते, अतः आत्मज्ञानस्यापि कर्म्मयोगान्तर्गतत्वात्, स एव ज्यायानित्यर्थः । कर्म्मणो ज्ञाननिष्ठाया ज्यायस्त्वमवगतं ज्ञाननिष्ठायामधिकारे सत्येवोपपद्यते । यदि सर्व्वं कर्म्म परित्यज्य केवलं ज्ञाननिष्ठायामधिकरोषि, तर्ह्यकर्म्मणस्ते ज्ञान-निष्ठस्य ज्ञाननिष्ठोपकारिणी शरीरयात्रापि न सेत्स्यति । यावत्साधन-समाप्ति शरीरधारणञ्चावश्यं कार्य्यं, न्यायार्ज्जितधनेन महायज्ञादिकं कृत्वा तच्छिष्टाशनेनैव शरीरधारणं कार्य्यम् । 'आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति श्रुतेः, 'ते त्वघं भुञ्जते पापाः' इति च वक्ष्यते । अतो ज्ञाननिष्ठस्यापि कर्म्माकुर्व्वतो देहयात्रा न सेत्स्यति । यतो ज्ञाननिष्ठस्यापि ध्रियमाणशरीरस्य यावत्साधनसमाप्ति महाय-ज्ञादिनित्यनैमित्तिककर्म्मावश्यं कार्य्यम् ; यतश्च कर्म्मयोगेऽप्यात्मनो-ऽकर्त्तृत्वभावनयात्मयाथात्म्यानुसन्धानमन्तर्भूतम् ; प्रकृतिसंसृष्टस्य कर्म-

यज्ञार्थात्कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ।
तदर्थं कर्म्म कौन्तेय मुक्तसङ्गः समाचर ॥९॥
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥
देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥१२॥

योगः सुशकोऽप्रमादश्च ; अतो ज्ञाननिष्ठयोगस्यापि ज्ञानयोगात् कर्म्मयोगो ज्यायान्, तस्मात् कर्म्मयोगमेव कुर्व्वित्यभिप्रायः” इति । कथमयं पक्षोऽनुमोदितश्चास्माभिरुक्तं तत् प्रागेव । ८ ।

कर्म्मणा बन्धनं भवत्यतो न कर्म्म कर्त्तव्यमिति मतं निराकुर्व्वन्नाह यज्ञार्थादिति । यज्ञः परमेश्वराराधनं तदर्थं “यज्ञो वै विष्णुः” इति ब्राह्मणविभागोक्तश्रुतेः विष्णोराराधनार्थं यत्कर्म्म तदन्यत्र कर्म्मणि प्रवृत्तोऽयं लोकः कर्म्मबन्धनः कर्म्मणा बध्यते । ततः तदर्थं परमेश्वराराधनार्थं, हे कौन्तेय, मुक्तसङ्गः फलाभिलाषशून्यः कर्म्म समाचर सम्यगनुतिष्ठ । ९ ।

परमेश्वराराधनरूपं कर्म्मोक्त्वा, इदानीं वैदिकयज्ञानुष्ठानविषयकं कर्त्तव्यमाह प्रजापतिवाक्येन सहयज्ञा इति । पुरा सृष्टिकाले सहयज्ञाः यज्ञसहिताः प्रजाः सृष्ट्वा प्रजापतिरुवाच—अनेन यज्ञेन प्रसविष्यध्वम् उत्तरोत्तरां वृद्धिं भजध्वम् । एष यज्ञः युष्माकम् इष्टकामधुक् अभीष्टभोगप्रदः अस्तु । १० ।

कथं यज्ञ इष्टकामधुक् स्यात् तत्राह देवानिति । अनेन यज्ञेन देवान् भावयत संवर्द्धयत, ते च देवा वो युष्मान् भावयन्तु संवर्द्धयन्तु । एवं परस्परं भावयन्तः परं श्रेयः प्राप्स्यथ । ११ ।

संवर्द्धनोदास्ये दोषमाह इष्टानिति । यज्ञभाविताः यज्ञैः संवर्द्धिताः

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्व्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥
अन्नाद्भवन्ति भूतानि पर्ज्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्ज्जन्यो यज्ञः कर्म्मसमुद्भवः ॥१४॥
कर्म्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्व्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥
एवं प्रवर्त्तितं चक्रं नानुवर्त्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

देवा वो युष्मभ्यम् इष्टानभिलषितान् भोगान् दास्यन्ते । एवं तैर्दत्तान् भोगान् एभ्यो देवेभ्यो अप्रदाय यो जनः भुङ्क्ते स्वदेहेन्द्रियाणि तर्पयति स स्तेनः तस्कर एव । एतदुपलक्षणम् । मानवादिभिरप्युपकृतत्वात् देहभरणमात्रप्रयोजनं संरक्षा शिष्टैस्तेषां सेवा विहिता, यदि तानुपेक्ष्य स्वस्य भोगाय तन्नियोजयति, स चौरः शासनार्हः । तथाहि श्रीमद्भागवते, "यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् । अधिकं योऽभिमन्येत स स्तेनो दण्डमर्हति ॥" (७स्क, १४अ, ८श्लो) इति । १२ ।

यज्ञशिष्टाशिन इति । यज्ञस्य शिष्टमशनमशितुं शीलं येषां ते सन्तः शिष्टाः सर्व्वकिल्बिषैः मुच्यन्ते, ये पापाः पापचारिणः आत्मकारणात् आत्महेतोः पचन्ति ते आत्मम्भरयस्तु अघं पापं भुञ्जते । १३ ।

जगच्चक्रप्रवृत्तिहेतुर्हि कर्म्म, अतस्तत्कर्त्तव्यमित्याह त्रिभिः, अन्नादिति, कर्म्मेति, एवमिति । भूतानि अन्नाद्भवन्ति, पर्ज्जन्यात् वृष्टेः अन्नसम्भवः अन्नोत्पत्तिः, यज्ञात्पर्ज्जन्यो वृष्टिर्भवति, यज्ञः कर्म्मसमुद्भवः ऋत्विग्यजमानव्यापारसाध्यः, कर्म्म ब्रह्मोद्भवं वेदोद्भवं विद्धि जानीहि, ब्रह्म वेदः अक्षरसमुद्भवम् अक्षरः परमात्मा समुद्भवो यस्य तत्, तस्मात् ब्रह्म वेदः सर्व्वगतं नित्यं यज्ञे प्रतिष्ठितम् । श्रीमद्रामानुजः श्लोकमिममेवं व्याचष्टे ;—"कर्म्म ब्रह्मोद्भवमित्यत्र ब्रह्मशब्दनिर्द्दिष्टं प्रकृति-

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः।
आत्मन्येव च सन्तुष्टस्तस्य कार्य्यं न विद्यते ॥१७॥

परिणामरूपं शरीरं 'तदेतद्ब्रह्म नामरूपमन्नञ्च जायते' इति ब्रह्मशब्देन प्रकृतिर्निर्द्दिष्टा। इहापि 'मम योनिर्महद्ब्रह्म' इत्युच्यते। अतः कर्म्म ब्रह्मोद्भवमिति प्रकृतिपरिणामरूपशरीरोद्भवं कर्म्मेत्युक्तं भवति। ब्रह्माक्षरसमुद्भवमित्यत्राक्षरशब्दनिर्द्दिष्टो जीवात्मा; अन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं कर्म्मणि प्रभवति। कर्म्मसाधनभूतं शरीरमक्षरसमुद्भवम्। तस्मात् सर्व्वगतं ब्रह्म सर्व्वाधिकारिगतं शरीरं नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः" इति। एवं प्रवर्त्तितं चक्रं जगच्चक्रं य इह नानुवर्त्तयति, स अघायुः पापजीवनः इन्द्रियारामः इन्द्रियक्रीड़ास्थानं, हे पार्थ, मोघं व्यर्थं स जीवति। १४।१५।१६।

एवं यावज्जीवं कर्म्म कर्त्तव्यमिति सिद्धम्। तच्च कर्म्म प्रजापतिवाक्येन वैदिकानामिन्द्रादिदेवानामेव यजनमिति स्थितम्। एवं सत्यात्माश्रयित्वाभावात् पुनः पुनस्तमुपक्षणं नात्यन्तिकबन्धनाशश्चेति महदनिष्टमायातम्। एतदनिष्टं दृष्ट्वानुगीतायामाहाचार्य्यः—"कर्म्म केचित्प्रशंसन्ति मन्दबुद्धिरता नराः। ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म्म ते ॥ कर्म्मणा जायते जन्तुः मूर्त्तिमान् षोड़शात्मकः। पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनाम् ॥" (५१अ, ३१।३२श्लो) इति। आत्माश्रयिणां यज्ञेनानृण्यमपेक्षरम्, तेषामस्मिन् स्वातन्त्र्यं तथा हि श्रीमद्भागवते "देवर्षिभूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन्। सर्व्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कृत्यम् ॥" (११स्क, ५अ, ४१श्लो) इति। तदर्थमाह यस्त्वात्मरतिरिति। यस्तु मानव आत्मरतिः, आत्मनि एव रतिर्न विषयेषु, आत्मतृप्तः आत्मनैव तृप्तः नान्नपानादिना, आत्मनि एव च सन्तुष्टः बाह्यसर्व्वविषयभोगानपेक्षा आत्मनि एव च सन्तोषपरः, तस्य कार्य्यं करणीयं वैदिकानुष्ठानं न

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्व्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

विद्यते। वदति ह्येवमाचार्य्यश्चतुर्थे,—"श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परन्तप। सर्व्वं कर्म्माखिलं पार्थ ज्ञाने परिसमाप्यते॥" (४।३३) इति। न च वक्तव्यमनेन निखिलकर्म्मत्यागोऽभिप्रेत इति; "योगसन्न्यस्तकर्म्माणं," (४।४१) "तस्मादज्ञानसम्भूतम्" (४।४२) इत्यादिभिः स्फुटतरम्। अत्रापि च "तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर" (३।१८) इति। १७।

धनजनाद्यनपेक्षकस्य तस्य तत्साधनैर्वैदिकानुष्ठानैर्न किञ्चित्प्रयोजनमस्तीत्याह, नैव तस्येति। नैव तस्य कृतेन प्रागुक्तेन वैदिकानुष्ठानेन अर्थः प्रयोजनम्; अकृतेन वैदिकानुष्ठानाकरणेन न कश्चन अर्थः प्रयोजनमस्ति। अनुपात्तानर्थशब्दोद्भावनेन व्याख्यानात्, अन्वयमुखेन व्याख्यानमेव रुचिरम्, यतस्तत् "मा कर्म्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्म्मणि" (२।४७) इत्याचार्य्योक्तेरनुसारि। तेन चानुपदमेव कर्म्माचरणप्रयोजनमर्थवद्भवति। नन्वयमेवाचार्य्यस्याभिप्राय इति स्थिते, आत्माश्रयित्वं पुनर्व्याहन्येत? न व्याहन्यते, "ब्रह्मार्पणं ब्रह्म हविः" (४।२४) इत्युक्तदिशा यज्ञोपादानेषु ब्रह्मदर्शनस्य सिद्धत्वात्। ज्ञानयज्ञपरायणास्तु नित्यानुष्ठेयोपासनादिषु देहेन्द्रियव्यापारेषु च यज्ञव्यापारं दृष्ट्वा नित्यक्रियावन्त एव। तद्यथानुगीतासु—"अग्निर्वैश्वानरो मध्ये सप्तधा दीप्यतेऽन्तरा। घ्राणं जिह्वा च चक्षुश्च त्वक् च श्रोत्रञ्च पञ्चमम्। मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्च्चिषः। घ्रेयं दृश्यञ्च पेयञ्च स्पृश्यं श्राव्यं तथैव च। मन्तव्यमथ बोद्धव्यं ताः सप्त समिधो मम॥ घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः। मन्ता बोद्धा च सप्तैते भवन्ति परमर्त्विजः॥ घ्रेये पेये च दृश्ये च स्पृश्ये श्रव्ये तथैव च। मन्तव्ये त्वथ बोद्धव्ये सुभगे पश्य सर्व्वदा। हवींष्यग्निषु होतारः सप्तधा सप्त सप्तसु॥" (२० अ, १८—२३ श्लो) इति। अस्य आत्माश्रयिणः सर्व्वे-

तस्मादसक्तः सततं कार्य्यं कर्म्म समाचर।
असक्तो ह्याचरन् कर्म्म परमाप्नोति पूरुषः ॥१९॥
कर्म्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसङ्ग्रहमेवापि सम्पश्यन् कर्त्तुमर्हसि ॥२०॥

भूतेषु देवमानवादिषु कश्चिदर्थव्यपाश्रयः प्रयोजनसम्बन्धो न चास्ति। आत्मपरायणत्वादन्यनिरपेक्ष एव सः। १८।

वैदिकानुष्ठानाकरणेन यतो न किञ्चन प्रयोजनं, ततोऽनासक्तया कर्म्मकरणमेव तव कर्त्तव्यमित्याह तस्मादिति। तस्मादसक्तः सङ्ग-रहितः सन् कार्य्यमवश्यकर्त्तव्यतया विहितं कर्म्म समाचर सम्यगनु-तिष्ठ। असक्तः कर्म्माचरन् पूरुषः परम् आत्मानं मोक्षम् आप्नोति। अत्र श्रीमच्छ्रीधरादिभिरर्ज्जुनस्य ज्ञानानधिकारित्वं दर्शयद्भिराचार्य्यै एवानादृतः, यतः सोऽर्ज्जुनं पूर्व्वस्मृतिविस्मोपेऽप्युत्तमज्ञानाधिकारिण-मेवाख्यासीत्, तदुपयथानुगीतासु, "नैतत् पार्थ सुविज्ञेयं व्यामिश्रेणैव मे मतिः। नरेणाकृतसंज्ञेन विदग्धेनाकृतात्मना॥ सरहस्यमिदं प्रोक्तं देवानां भरतर्षभ। कच्चिन्नेदं श्रुतं पार्थ मनुष्येणेह कर्हिचित्॥ न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ। नैतदद्य सुविज्ञेयं व्यामि-श्रेणान्तरात्मना॥" (१९अ, ५६—५८श्लो) इति। १९।

कर्म्मानुष्ठाने कारणान्तरमपि दर्शयति कर्म्मणैवेति। कर्म्मणैव जनकादयः संसिद्धिं सम्यग्ज्ञानम् आस्थिताः प्राप्ताः। अतः कर्म्म समाचर। "यतो ज्ञानयोगाधिकारिणोऽपि कर्म्मयोग एवात्मदर्शने श्रेयान्, अतश्च जनकादयो राजर्षयो ज्ञानिनामग्रेसराः कर्म्मयोगेनैव संसिद्धिमास्थिताः, आत्मानं प्राप्तवन्तः" इति श्रीमद्रामानुजः। जन-कादयो ह्यात्मसाक्षात्कारानन्तरं राज्यपालनादिषु प्रथमं विमुखा अभू-वन्, ततो भगवदाज्ञया तत्कार्य्येषु नियुक्ता इति योगवाशिष्ठादिभ्यो-ऽवगन्तव्यम्। जनकादिभिः क्षत्रियत्वहेतोर्न सन्न्यास आश्रित इति

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥२१॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किञ्चन।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणि ॥२२॥

सिद्धान्तोऽसत्रैव भरतऋषभादीनां कर्म्मत्यागदर्शनात्। नाहं देवानां पितॄणां भूतानामृणी किङ्करो वात्मात्रयित्वादिति चेन्मन्यसे, तथापि लोकसंग्रहमेव लोकानां कल्याणसाधनं स्वदृष्टान्तेन स्वधर्म्मे स्थापनं पश्यन् कर्म्म कर्त्तुमर्हसि। परात्मताप्रयोजितेयं लोकसंग्रहस्पृहेति जनकदृष्टान्तेन प्रतिपन्नमध्यायप्रारम्भे। केयं परात्मता? "शश्वत्परार्थ सर्व्वेहः परार्थैकान्तसम्भवः। साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम्॥" (भा, ११स्क, ७अ, ३८श्लो) इति। २०।

अकिङ्करस्यानृणस्य लोकसंग्रहापेक्षा किं न तमुच्चतमधर्म्मात् प्रच्यावयतीति विप्रतिपत्तिमुच्चधर्म्माश्रयिणः आचरणेनापरेषां कल्याणमकल्याणञ्च चिरसंयुक्तम्, अतस्तदुपेक्षयाऽपराधभाक्त्वमवश्यम्भावीति प्रदर्श्य निराकरोति यद्यदिति। श्रेष्ठः कृत्स्नशास्त्रज्ञतया तदनुष्ठानतया च प्रसिद्धो जनः यत् यत् आचरति तत् तदेव इतरोऽकृत्स्नविज्जन आचरति। स यत् लौकिकं वैदिकं वा प्रमाणं कुरुते प्रमाणत्वे मन्यते, लोकः तत् अनुवर्त्ततेऽनुसरति। २१।

सर्व्वसंशयं निराकर्त्तुमात्मदृष्टान्तमाचार्य्य उपस्थापयति न मे इति हे पार्थ, किञ्चन मम कर्त्तव्यं नास्ति। यतः त्रिषु लोकेषु अनवाप्तम् अप्राप्तम् अवाप्तव्यं प्रापणीयं न मम अस्ति, अनन्तब्रह्माधिकृतत्वात् तथापि वर्त्त एव चाहं कर्म्मणि। कथमाचार्य्यस्य कर्म्मणोष्टगादरः प्रकटितस्तत् स्वयमेवमुद्योगपर्व्वणि;—"या वै विद्याः साधयन्तीह कर्म्म तासां फलं विद्यते नेतरेषाम्। तत्रेह वै दृष्टफलन्तु कर्म्म पीत्वोदकं शाम्यति तृष्णयार्त्तः॥ सोऽयं विधिर्विहितः कर्म्मणैव संवर्त्त

यदि ह्यहं न वर्त्तेयं जातु कर्म्मण्यतन्द्रितः ।
मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्व्वशः ॥२३॥

उत्सीदेयुरिमे लोका न कुर्य्यां कर्म्म चेदहम् ।
सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

प्रश्नय तत्र कर्म्म । यत्र योऽस्मिन् कर्म्मणः साधु मन्ये मोघं तस्यालपितं दुर्बलस्य ॥ कर्म्मणामी भान्ति देवाः परत्र कर्म्मणैवेह प्लवते मातरिश्वा । अहोरात्रे विदधत् कर्म्मणैव अतन्द्रितः शश्वदुदेति सूर्य्यः ॥ मासार्द्ध-मासानथ नक्षत्रयोगानतन्द्रितश्चन्द्रमाश्चाभ्युपैति । अतन्द्रितो दहते जातवेदाः समिध्यमानः कर्म्म कुर्व्वन् प्रजाभ्यः । अतन्द्रिता भारमिमं महान्तं बिभर्त्ति देवी पृथिवी बलेन । अतन्द्रिताः शीघ्रमपो वहन्ति सन्तर्पयन्त्यः सर्व्वभूतानि नद्यः ॥ अतन्द्रितो वर्षति भूरितेजाः सन्नादयन्नन्तरिक्षं दिशश्च । अतन्द्रितो ब्रह्मचर्य्यं चचार श्रेष्ठत्वमिच्छन् बल-भिद्देवतानाम् ॥ हित्वा सुखं मनसश्च प्रियाणि देवः शक्रः कर्म्मणा श्रैष्ठामाप । सत्यधर्म्मौ पालयन्नप्रमत्तो दमं तितिक्षां समतां प्रियञ्च ॥ एतानि सर्व्वाण्युपसेवमानः स देवराज्यं मघवान् प्राप मुख्यम् । बृह-स्पतिर्ब्रह्मचर्य्यं चचार समाहितः संशितात्मा यथावत् ॥ हित्वा सुखं प्रतिरुध्येन्द्रियाणि तेन देवानामगमद्गौरवं सः । तथा नक्षत्राणि कर्म्म-णामुत्र भान्ति रुद्रादित्या वसवोऽथापि विश्वे ॥ यमो राजा वैश्रवणः कुवेरो गन्धर्व्वयक्षाप्सरश्च सूत । ब्रह्मविद्यां ब्रह्मचर्य्यं क्रियाञ्च निषेव-माणा ऋषयोऽमुत्र भान्ति ॥" (२८अ, ७—१६श्लो) इति । २२ ।

ब्रह्मभूतोऽपि कथन्त्वमसम्यक इव कर्म्मणि वर्त्तसे इति प्रश्नमुत्थाप्य तदुत्तरमाह द्वाभ्यां यदीति, उत्सीदेयुरिति । हे पार्थ, यदि ह्यहम् अतन्द्रितः निरलसः सन् जातु कदाचित्कर्म्मणि न वर्त्तेयं कर्म्म नानुति-ष्ठेयं, मनुष्याः सर्व्वशः सर्व्वप्रकारेण मम वर्त्म अनुवर्त्तन्ते अनुवर्त्तेरन् । चेदहं कर्म्म न कुर्य्याम्, इमे लोका उत्सीदेयुः विनश्येयुः, धर्म्मलोपात्

सक्ताः कर्म्मण्यविद्वांसो यथा कुर्व्वन्ति भारत ।
कुर्य्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसङ्ग्रहम् ॥२५॥

न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम् ।
योजयेत्सर्व्वकर्म्माणि विद्वान् युक्तः समाचरन् ॥२६॥

सङ्करस्य च कर्त्ता स्याम्, इमाः प्रजाः उपहन्याम् मलिनीकृत्य विनाशयेयम् । कर्म्मणैव सर्व्वं जगत् यथावत् स्थितम्, एवं मानवसमाजोऽपि । आलस्ये पुनः स्वभावविकारः, स्वभावविकारे धर्म्मलोपः, धर्म्मलोपे मर्य्यादालङ्घनम्, मर्य्यादालङ्घने जनक्षय इति पश्यतो ज्ञानिनः कर्माणि प्रवृत्तिः । अतएव हि ध्यानयोगिनमप्युपलक्ष्याचार्य्य आह— "युक्तचेष्टस्य कर्म्मसु" (६।१७) इति । २३।२४ ।

प्रामण्याभावेऽपि परेषां कल्याणार्थं कर्म्मानुष्ठानं माऽस्त्वे बन्धनाय भूदिति फलाभिसन्धित्यागेनैव कर्त्तव्यमित्याह सक्ता इति । अविद्वांसोऽज्ञानिनः कर्म्मणि सक्ताः फलाभिलाषादभिनिविष्टाः यथा कुर्व्वन्ति कर्म्मानुतिष्ठन्ति, लोकसंग्रहं लोककल्याणं चिकीर्षुः विद्वान् असक्तः फलाभिसन्धिरहितः सन् तथा कुर्य्यात् कर्म्मानुतिष्ठेत् । २५ ।

कथमज्ञायह: ? अज्ञस्याचारप्रवर्त्तयितृत्वात् । तदेवाह न बुद्धिभेदमिति । अज्ञानां कर्म्मसङ्गिनां कर्म्मासक्तानां बुद्धिभेदं बुद्धिविचालनं कर्म्मफलेषु संशयापन्नत्वं न जनयेत् । युक्तः योगयुक्तः कर्त्तृत्वाभिमानत्यागेन हृद्यधिष्ठितेश्वरप्रेरणानुसारी सन् विद्वान् समाचरन् स्वयं सम्यगाचरन् सर्व्वकर्म्माणि योजयेत् कारयेत् । श्रीमता जीवेन क्रमसन्दर्भे "स्वयं निःश्रेयसं विद्वान्" इति भागवतपद्यमाश्रित्य या विप्रतिपत्तिरुत्थापिता विचारिता साध्यायारम्भे । श्रीमद्बलदेवः श्रीमद्विश्वनाथश्च तमेवानुसरतोऽत्र । श्रीमन्मधुसूदन आह,—"अनधिकारिणामुपदेशेन बुद्धिविचालने कृते कर्म्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेरुभयभ्रष्टत्वं स्यात् । तथाचोक्तम्, 'अज्ञस्यार्द्धप्रबुद्धस्य सर्व्वं ब्रह्मेति यो वदेत् ।

प्रकृते: क्रियमाणानि गुणै: कर्म्माणि सर्व्वश:।
अहङ्कारविमूढ़ात्मा कर्त्ताहमिति मन्यते ॥२७॥

महानिरयजालेषु स तेन विनियोजित: ॥" इति। विषमयफलमस्य सर्व्वं ब्रह्मेति भाषणस्य प्रत्यक्षीभवति भारते विविधेषु स्थानेषु। ये पुनर्वदन्ति, राजधर्म्मानुसारिण आचार्य्यस्याऽयं पन्था नोऽस्मनमध- र्म्मानुमोदित इति तेषां तद्वादमनुसन्धायैव तेनोक्तं—"ये त्वेतदभ्य- सूयन्तो नानुतिष्ठन्ति मे मतम्। सर्व्वज्ञानविमूढ़ांस्तान् विद्धि नष्टानचेतस: ॥" (३।३२) इति। कथं सर्व्वज्ञानविमूढ़ास्ते? "सदृशं चेष्टते स्वस्या: प्रकृतेर्ज्ञानवानपि" (३।३३) इति कारणात्। न कोऽपि सर्व्वथा क्रियाहीनो भवितुं शक्तो ज्ञानवान् अज्ञानवान् वा। यद्येवं तदा स एव पन्था अवलम्बनीयो येन कर्म्म कृत्वापि तज्जनितबन्धनं न स्यात्। अर्द्धप्रबुद्धा ज्ञानाभिमानिन: पुन: कर्म्मणोऽपरिहार्य्यत्वमनभिसन्धाय, तस्य चावश्यम्भावि सदसत् फलम- पेक्ष्य सत्कर्म्म नानुतिष्ठन्ति, सर्व्वं ब्रह्मेति वादमाश्रित्य धर्म्माधर्म्मभेदं विलोप्य प्रवृत्तिधामनाबशाद्सत्कर्म्मण्येव प्रवर्त्तन्ते। एवं ते खल्वात्म- विनाशं साधयन्ति। ज्ञानिनस्तु कर्म्मणोऽपरिहार्य्यत्वं जानन्त: कर्त्तृ- त्वाभिमानत्यागेन तान्यनुतिष्ठन्ति यैर्जनानां कल्याणं भवति, तदनु- सरणेन प्रवृत्तिवासनाविमोक्षश्च। अतएव पराक्रमवतां लोकसंग्रहाभि- लाषो मोक्षनमधर्म्मविरोधी, प्रत्युत तदनुगत एवेति तत्त्वम्। विविधेषु कर्म्मसु जनकल्याणार्थं कानि वानुष्ठेयानीति जिज्ञासायां तत्र हृद्यधि- ष्ठितेश्वरप्रेरणानुसरणमेव श्रेय इति युक्ता मीमांसा। अतएव 'युक्त:' इति विशेषणमत्रोपात्तम्। २६।

कर्त्तृत्वाभिमान एव बन्धकारणं, स एवाज्ञानिषु नियतानुबन्धीति ज्ञानिनो तेषां भेदप्रदर्शनायाह प्रकृतेरिति। प्रकृतेर्गुणैर्विकारै: कार्य्य- कारणरूपै: शरीरेन्द्रियप्राणै: सत्त्वरजस्तम:प्रधानै: सर्व्वश: सर्व्वप्रकारेण कर्म्माणि क्रियमाणानि। अहङ्कारविमूढ़ात्मा विवेकज्ञानशून्यतया

तत्त्ववित्तु महाबाहो गुणकर्म्मविभागयोः ।
गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते ॥२८॥

शरीरादिष्वहंबुद्धिः, अहं कर्त्ता एकोऽहमेव शरीरादिनियामकत्वेन कर्म्मनिष्पादक इति मन्यते। एवं सिध्यति मिथ्यादृष्टिनिबन्धन एव कर्म्मणा बन्धः। २७।

किं पुनर्मन्यते विद्वान् तदाह तत्त्वविन्त्विति। गुणाः शरीरेन्द्रियप्राणाः सत्त्वरजस्तमःप्रधानाः; तेषां कर्म्माणि दर्शनस्पर्शनश्वयबुद्ध्यादीनि। गुणविभागश्च कर्म्मविभागश्च गुणकर्म्मविभागौ तयोर्गुणकर्म्मविभागयोः। कोऽयं गुणविभागः कर्म्मविभागो वा? विभागोऽधिकृतांशः; गुणैरधिकृतांशः कर्म्मभिरधिकृतांशश्च। यद्यपि गुणेभ्य एव कर्म्माण्युत्पद्यन्ते, तथाप्युत्पत्त्यनन्तरं तानि शरीरादिषु विकारानुत्पादयन्ति, विकारजनितदीर्घकालस्थायिफलानि च। तैर्विकारैः फलैश्च पुनः शरीरादिषु गुणा उद्रिच्यन्ते, संस्काराकारेण गुणोद्रेकविधायकेन च पुनस्तेषु तानि तिष्ठन्ति। एवं पुनः पुनः कर्म्मयोगात् जीवनप्रवाहाविच्छेदः। गुणकर्म्मविभागयोस्तत्त्ववित्, हे महाबाहो, गुणाश्चक्षुरादयः गुणेषु तद्विषयेषु वर्त्तन्ते, न तु आत्मा, इति मत्वा न सज्जते सक्तिं कर्त्तृत्वाभिनिवेशं न करोति। 'गुणकर्म्मविभागयोः गुणविभागस्य कर्म्मविभागस्य च तत्त्ववित्' इति श्रीमच्छङ्करः। 'गुणकर्म्मविभागयोः सत्त्वादिगुणविभागे तत्तत्कर्म्मविभागे च तत्त्ववित्' इति श्रीमद्रामानुजः। 'नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः, नाहं कर्म्मात्मक इति कर्म्मभ्यश्चात्मनो विभागः, तयोर्गुणकर्म्मविभागयोस्तत्त्वं वेत्ति' इति श्रीमच्छ्रीधरः। 'गुणा देहेन्द्रियान्तःकरणानि अहङ्कारास्पदानि, कर्म्माणि तु तेषां व्यापारभूतानि ममाकारास्पदानि—गुणकर्म्मेति द्वन्द्वैकवद्भावः। विभज्यते—सर्व्वेषां जड़ानां विकारिणां भासकत्वेन पृथग्भवतीति—स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा—गुणकर्म्म च विभागश्चेति द्वन्द्वः—तयोर्गुणकर्म्मविभागयोर्भास्यभासकयोर्जड़चेतन्ययोर्वि-

प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्म्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९
मयि सर्व्वाणि कर्म्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्म्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

कारिनिर्विकारयुक्तत्वं साक्षात्कारं यो वेत्ति' इति श्रीमधुसूदनः । 'गुणविभागस्य कर्म्मविभागस्य च तत्त्ववित्, गुणेभ्य इन्द्रियेभ्यः कर्म्म-भ्यश्च यः स्वस्य विभागो भेदस्तस्य तत्त्वं स्वरूपं तस्य वैधर्म्यपर्य्यालोचनया यो नाहं गुणकर्म्मस्वरूप इति वेत्ति' इति श्रीमद्बलदेवः । 'यस्तत्त्ववित् स "गुणा गुणेषु वर्त्तन्त इति मत्वा न सज्जते" गुणविभागे कर्म्मविभागे च न सज्जते...... । गुणानां सत्त्वरजस्तमसां विभागः बुद्ध्यहङ्कार-ज्ञानेन्द्रियकर्म्मेन्द्रियविषयरूपो विभज्यावस्थानं तस्मिन्न सज्जते इदमह-मिति न मन्यते' इति श्रीमन्नीलकण्ठः । 'गुणविभागः सत्त्वरजस्तमांसि कर्म्मविभागः सत्त्वादिकार्य्यभेदा देवतेन्द्रियविषयाः, तयोस्तत्त्वं स्वरूपं तज्ज्ञः' इति श्रीमद्विश्वनाथः । सर्व्वैरेतैर्व्याख्यातैः शरीरेन्द्रियादिव्यापा-रादात्मनो भेदः पृथक्त्वमेव प्रतिपाद्यते । २८ ।

ये तु न गुणकर्म्मविभागज्ञास्तान् प्रति कर्त्तव्यमाह प्रकृतेरिति । प्रकृतेर्गुणसम्मूढाः, गुणैर्देहादिभिर्विकारैः सम्यक् मोहिताः सन्तः गुण-कर्म्मसु गुणानां कर्म्मसु देहादीनां व्यापारेषु सज्जन्ते फलाय कर्म्म कुर्व्वन्ति । तान् अकृत्स्नविदः असम्यग्दर्शिनः मन्दानल्पप्रज्ञान् कृत्स्न-वित् सम्यग्दर्शी आत्मवित् न विचालयेत् तेषां बुद्धिभेदं नापादयेत् । स्वयं कर्म्माचरन् कर्म्मोपदिशन् कर्म्मणा भगवद्दर्शनं भवतीति बोधयन् कर्म्मजनितसिद्धिभाजस्तान् कुर्व्वीतेत्याशयः । २९ ।

एवमात्मनः प्रकृतिव्यापारेभ्यः पृथक्त्वं समाध्यात्मनि स्थितिपूर्व्वक-मकृतभाववर्ज्जितं नैष्कर्म्यमनभिमन्य, सर्व्वान्तर्यामिणमपरोक्षभावेना-त्मनोपरि संस्थाप्य, तस्मिन् सर्व्वाणि स्वभावनियतानि कर्म्माणि निक्षिप्य, तेन प्रयोजितान्येतानीति विधाय, तत्साधनं तदाज्ञापालनमिति

विश्वस्य, ज्ञानभक्तिकर्म्मसमन्वितो योगी कृतकृत्यो भवतीत्यात्मनो नवीनं मतं विवृणोत्याचार्य्यो मयि सर्व्वाणीति। मयि अन्तर्यामि-ण्यपरोक्षे परमात्मनि सर्व्वाणि कर्म्माणि सन्न्यस्य निक्षिप्य समर्प्य अध्यात्म-चेतसा विवेकबुद्ध्या—'आत्मनि यच्चेतस्तदध्यात्मचेतः' देहेन्द्रियादिभ्य-श्चेतो विभज्य नियतात्मनि संस्थाप्य विवेकबुद्धियुक्तस्तद्भावेन—निराशीः आज्ञापालनमात्रप्रयोजनत्वात् फलेच्छाशून्यः, निर्म्ममः ममत्ववर्ज्जितः ममानुष्ठितं कर्म्म मां फलेन योजयेदिति ममतावर्ज्जितः, विगतज्वरः सन्तापरहितः युध्यस्व स्वभावविहितं क्षत्रियोचितं कर्म्मानुतिष्ठ ; स्वयमाचरन्नात्मदृष्टान्तेन जनान् ज्ञानकर्म्मभक्तिरतान् कुरु। श्रीमच्छ-ङ्करकृतव्याख्याऽध्यायारम्भे उद्धृता। श्लोकोऽयं श्रीमद्रामानुजेनैवं व्याख्यातः ;—"ज्ञानयोगाधिकारिणोऽपि ज्ञानयोगादस्यैव कर्म्मयोगस्य ज्यायस्त्वं पूर्व्वमेवोक्तम्। अतो व्यपदेश्यः लोकसंग्रहाय त्वमेवं कुर्य्याः। प्रकृतिविविक्तात्मस्वभावनिरूपणेन गुणेषु कर्त्तृत्वमारोप्य कर्म्मानुष्ठान-प्रकार उक्तः। गुणेषु कर्त्तृत्वानुसन्धानञ्चेदमेव ;—आत्मनो न स्वरूप-प्रयुक्तमिदं कर्त्तृत्वम्, अपि तु गुणसम्बन्धकृतमिति। प्राप्ताप्राप्तविवे-केन गुणकृतमित्यनुसन्धानम्। इदानीमात्मनां परमपुरुषशरीरतया तन्नियम्यत्वस्वरूपनिरूपणेन भगवति पुरुषोत्तमे सर्व्वात्मभूते गुणकृतञ्च कर्त्तृत्वमारोप्य कर्म्मकर्त्तव्यतोच्यते मयीति। मयि सर्व्वेश्वरे सर्व्वभूतान्त-रात्मभूते सर्व्वाणि कर्म्माणि अध्यात्मचेतसा सन्न्यस्य निराशीर्निर्म्ममो विगतज्वरो युद्धादिकं सर्व्वमेवेदानीं कर्म्म कुरुष्व। आत्मनि यच्चेत-स्तदध्यात्मचेतः ; तेन आत्मस्वरूपविषयेण श्रुतिशतसिद्धेन ज्ञानेनेत्यर्थः। 'अन्तःप्रविष्टः शास्ता जनानां सर्व्वात्मा,' 'अन्तःप्रविष्टं कर्त्तारमेतम्,' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो, यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति, स त आत्मान्तर्याम्यमृतः' इत्येवमाद्याः श्रुतयः, परमपुरुषप्रवर्त्त्यतच्छरीरभूतमेनमात्मानं परमपुरुषञ्च प्रवर्त्तयि-तारमाचक्षते। स्मृतयश्च 'प्रशासितारं सर्व्वेषाम्' इत्याद्याः। 'सर्व्वस्य चाहं हृदि सन्निविष्टः', 'ईश्वरः सर्व्वभूतानां हृद्देशेऽर्ज्जुन तिष्ठति।

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः॥३१॥

भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया॥' इति च वक्ष्यति। अतो मच्छरीरतया मदात्मकानि मदुपायभूतान्यपि सर्वाणि कर्माणि मयैव क्रियमाणानीति मयि परमपुरुषे सन्न्यस्य, तानि च केवलं मदाराधनानीति कृत्वा तत्फले निराशीः, अत एव कर्मणि ममतारहितो भूत्वा विगतज्वरो युद्धादिकं कुरुष्व। स्वकीयेनात्मना कर्त्रा स्वकीयैरेव करणैः स्वाराधनैकप्रयोजनाय परमपुरुषः सर्वेश्वरः सर्वशेषी स्वयमेव स्वकर्माणि कारयतीत्यनुसन्धाय कर्मसु ममतारहितः, प्राचीनेनानादिकालप्रवृत्तानन्तपापसञ्चयेन कथमहं भविष्यामीत्येवंभूतान्तर्ज्वरविनिर्मुक्तः परमपुरुष एव कर्मभिराराधितो बन्धान्मोचयतीति सुखेन कर्मयोगमेव कुर्वित्यर्थः।'' इति। एवमप्यास्यं भगवदनुभवरूप भक्तौ नित्यमिति वैष्णवशास्त्रमीमांसात्मना श्रीमता जीवेनैवमुक्तं तत्सन्दर्भे,—''तत्र च ते जीवा ये कंचिद्भगवदर्थानुभवसंसारमा, ये च तदैव वा लब्धमहत्कृपातिशयदृष्टिप्रसृतयस्तेषां ताहशाविनस्वतःस्वमशिद्धवस्तुपरिग्रहप्रवणारम्भमात्रेणैव तत्कालमिव युगपदेव तत्साम्मुख्यं तदनुभवोऽपि जायते। यथोक्तम, 'किं वा परैरीश्वरः, सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्' इति। तत्तेषां नोपदेशान्तरापेक्षा। याद्टच्छिकमुपदेशान्तरग्रहणन्तु तच्छीलादशवणवत् तदीयरसस्यैवोद्दीपकम्। यथा श्रीप्रह्लादादीनाम्।'' इति। ३०।

एवं ज्ञानकर्मभक्तिसमन्वायकं मतं मोक्षसाधकं ज्ञानभक्तियुक्ततया कर्मणः प्राधान्यमित्युपदिशति ये मे इति। श्रद्धावन्तः श्रद्दधानाः दृढविश्वासाः, अनसूयन्तः—गुणेषु दोषाविष्करणमसूया तच्छून्याः,—दुःखात्मके कर्मणि मां नियोजयसीति परमकारुणिके दोषारोपणं तद्विरहिताः, मानवाः, इदं मम मतं, नित्यमनुतिष्ठन्ति अनुवर्त्तन्ते, तेऽपि,—

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥३४॥

सिद्धिं प्रापयति । ये अज्ञात एव निस्पृहाः, किन्ते न प्रारब्धतो नैष्कर्म्यविषये शक्ताः ? तेषामपि तत्स्वभावजानि ध्यानशीलतादीनि सन्ति । नैष्कर्म्यादिकर्म्मभिस्तेषामाचार्य्यमतानुसरणं श्रेयः, अन्यथानिष्टापातोऽनिवार्य्य एव । ३३ ।

यदि ज्ञानिनोऽज्ञानिनो वा सर्व्वे जनाः प्रकृतेरधीना विधिनिषेधानुसरणाशक्ताः किं फलं तदा शास्त्रोपदेशेनेति संशयं स्वयमुत्थाप्य तदुत्तरमाह इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति वीप्सया सर्व्वेषामिन्द्रियाणामित्युक्तम् । सर्व्वेषामिन्द्रियाणां विषये, ज्ञानेन्द्रियाणां श्रोत्रादीनां शब्दे स्पर्शे रूपे रसे गन्धे च, कर्म्मेन्द्रियाणां वागादीनां वचनादौ, रागद्वेषौ आनुकूल्यप्रातिकूल्ये व्यवस्थितौ व्यवस्थया स्वस्वस्वभावविहितनियमेन स्थितौ । यस्य जनस्य यादृशी प्रकृतिः, तत्प्रकृतिगतनियमेन विषयेषु रागो द्वेषो वा प्रतिनियतं परिलक्ष्यते । तयोः रागद्वेषयोः वशं न आगच्छेत्, ताभ्यामन्धभावेन परिचालितो न भवेत्, किन्तु विवेकानुगतावेव तौ कुर्व्वीत । कथमेवं कुर्य्यात् ? तौ रागद्वेषौ हि अस्य मुमुक्षोः परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्त्तारौ । यद्येवं कथं सिध्यति वक्ष्यमाणं "स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः" इति । कोऽयं स्वधर्म्मः ? स्वभावनियतो धर्म्मः । "स्वभावनियतं कर्म्म" (१८।४७), "सहजं कर्म्म कौन्तेय" (१८।४८), "स्वभावजेन कौन्तेय" (१८।६०) इत्यादिभिः सुव्यक्ततरोऽयम् । यदि स्वभावविहितधर्म्मानुसरणमेवाचार्य्यस्याभिप्रेतं, तत्कथं तदनुगतरागद्वेषनियमने पुनर्निर्बन्धः ? शृणु तावत् तत्त्वमस्य । सत्त्वरजस्तमोविमिश्र एव स्वभावः ; अतस्तस्मिन् तमोगुणसम्भूतः जड़स्वभावः, रजस्तमोविमिश्रः पशुस्वभावः, रजोगुणोद्भूतो मानवस्वभावः, सत्त्वगुणसम्भूतो दैवस्वभावो विद्यत एव । एवं स्वभावसाहचर्य्यस्यावश्यम्भावित्वादन्तर्निहितनिगूढ़दैवस्वभावेन विवे-

किन्तु जड़स्वभावस्य पशुस्वभावस्य मानवस्वभावस्य च नियमनं मोक्षायेति पश्यन् तत्तत्स्वभावविहितरागद्वेषाभ्यां परिचालितानीन्द्रियाणि यथा न तदधीनतां गच्छन्ति तदर्थं यत्ननियोगायाचार्य्य उपदिशति—"तयोर्न वशमागच्छेत्" इति। "अन्यथा प्रतिपन्नास्ते विरुद्धा ये च कर्म्मणः" (२३पृष्ठे) इत्यादिभिः सङ्क्षिप्तवचनमिदं स्फुटीकृतं तेन। एवं विशोधिते स्वभावे सत्त्वगुणोद्रेकः, तेन च स्वकर्म्मणा भगवदाराधनं सिध्यति। "सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्। सर्व्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥" (१८।४८) इत्यत्रेन्धनस्थानीयः जड़स्वभावः, धूमस्थानीयः पशुमानवस्वभावः, अग्निस्थानीयः देवस्वभावः। देवस्वभावेन रजस्तमोऽनभिभूतेन सत्त्वेन विशुद्धसत्त्वत्वमुपनिहतं; तस्मिन् पुनः परमपुरुषोऽपरोक्षज्ञानविषयो भवति। तद्यथा भागवते "पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः। तमसस्तु रजस्तस्मात् सत्त्वं यद्ब्रह्मदर्शनम्॥" (१स्क, २अ, २४श्लो), "सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः" (४स्क, ३अ, २३श्लो) इति। सत् ब्रह्म तद्भावः सत्त्वम्, ततस्तस्मिन् ब्रह्मप्रकाशः। अतएव हि पूर्व्वमुक्तम्, "नित्यसत्त्वस्थः" (२।४५) इति। विना भजनक्रियां रजस्तमोऽभिभवो न सम्भवति, अतः "यतः प्रवृत्तिर्भूतानाम्" (१८।४६) इत्युक्तरीत्या अध्यात्मचेतसा भगवदर्च्चनमत्र शास्त्रे विहितम्। भागवते तु श्रवणम्, तेन च रजसा तमसाऽनाविद्धत्वं चेतसः। तद्यथा "शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्त्तनः। हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत् सताम्॥ नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया। भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी॥ तदा रजस्तमोभावाः कामलोभादयश्च ये। चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदति॥" (१स्क, २अ, १७—१८श्लो) इति। सर्व्वथाचार्य्यसम्मतपथमाश्रित्य ज्ञानवतः साधनमेवं भवति ;—सदोषमपि स्वभावं न त्यजेदिति शासनमनुसृत्य प्रथमन्तावत् तमःस्वभावं जड़त्वं जड़भरतदृष्टान्तेन भोग्यविषये नियोजयन् तस्मिन्नुदासीनः सोऽवतिष्ठेत, ततो रजःस्वभावं महोत्साहं विश्वामित्रदृष्टा-

श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात् ।
स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः ॥३५॥

अर्ज्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापश्चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥

नैष्कर्म्यमनत्त्वलाभविषये नियोजयन् [illegible] प्रपन्नत्वं लभेत, ततः स्थित-प्रज्ञया सिद्धासिद्धोः समत्वमाश्रित्य सत्त्वस्वभावं विवेकज्ञानं वशिष्ठ-दृष्टान्तेनापरोक्षब्रह्मदर्शनविषये नियोजयन् तस्मिन् कृतकृत्यो भगवत्-प्रेरणोपजीव्यो नैष्कर्म्यसिद्धिं भगवत्सर्व्वस्वां विन्देत । ज्ञानवन्तः स्वयमेव साधनमवलम्ब्य स्वदृष्टान्तेनेतरजनान् सुकर्म्मणि तथा नियोजयेयुः, यथा ते तेषां प्रकृत्यनुसारतः तमोरजोऽभिभूय सत्त्वे स्थितिं लभेरन् । अस्या-मवस्थायां "सर्व्वं जिह्मं मृत्युपदमार्ज्जवं ब्रह्मणः पदम् । एतावान् ज्ञानविषयः प्रलापः किं करिष्यति ॥" (म, प, ११अ, ४श्लो) इत्याचा-र्य्योक्तिः साधकस्य जीवने प्रस्फुरति । ३४ ।

एवं रागद्वेषौ स्ववशे समानीय किं कर्त्तव्यं तदाह श्रेयानिति । स्वधर्म्मः स्वभावविहितधर्म्मः विगुणः सदोषो रजस्तमोऽनुविद्धः स्वनुष्ठि-तात् प्रकृष्टभावेनानुष्ठितात् परधर्म्मात् परस्वभावनियतधर्म्मात् श्रेयान् ; परधर्म्माचरणे "प्रकृतिस्त्वां नियोक्ष्यति" (१८।५९) इति न्यायाद्भ्रंश-स्यावश्यम्भावित्वात् । स्वधर्म्मे निधनं प्राणात्ययोऽपि श्रेयः धर्म्मार्थं प्राणात्ययस्य निःश्रेयससाधकत्वात् । परधर्म्मोऽन्ते विध्वंसकत्वात् भया-वहः भयहेतुः, स्वभावानुगतस्वधर्म्मविहितेश्वरेऽनभिनिवेशवशात् । कथम् ? "भयं द्वितीयाभिनिवेशतः स्यात्" (भा, ११स्क, २अ, ३७श्लो) इति हेतोः । तत्त्वमुक्तमग्रे । ३५ ।

यद्यपि "ध्यायतो विषयान् पुंसः" (२।६२) इत्यत्र भावतः पापा-चरणस्य हेतुरुक्तः, तदतिक्रमणाय च "रागद्वेषविमुक्तैः" (२।६४) इत्या-दिभिः "इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ" इत्यस्य मूलं तत्रैव

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

विन्यस्तम्, तथाप्येतदध्यायोचितविषये तस्योपयोगितावशात् पुनरुक्तः स एवार्थ आचार्य्येण ; सुतरामर्ज्जुनोऽपि पूर्व्वोक्तस्य स्फुटतरभाषया नूतनविनियोगं बुभुत्सुः पृच्छति अथ केनेति । अथ, हे वार्ष्णेय, अनिच्छन्नपि बलान्नियोजित इव केन प्रयुक्तः अयं पुरुषः पापं चरति ? ३६ ।

प्रश्नोत्तरमाहाचार्य्यः काम इति । रजोगुणसमुद्भवः दुःखप्रवृत्तिबलात्मको रजोगुण एव समुद्भवः प्रभवः कारणं यस्य स रजोगुणसमुद्भवः एष कामः विषयेष्वभिलाषः, एषः क्रोधः परप्रतिहतकामजनितहृदयज्वालः महाशनः महदशनमस्येति विषयसेवानुपरतः दुष्पूरः महापाप्मा महान् पाप्मा पापं यस्माद्भवति स महापाप्मा । क्रोधस्य प्रतिहतकामोत्पन्नत्वात् कामादभिन्नः, अत उभयोरेकत्वमाश्रित्याह, एनं कामं वैरिणं शत्रुं विद्धि जानीहि । कामोऽयमात्मनोऽभिव्यक्तेरभिव्यक्तः, तद्यथा "आत्मैवेदमग्र आसीदेक एव, सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म्म कुर्व्वीयेत्येतावान् वै कामः नेच्छंश्च नातो भूयो विन्देत् ।" (बृ, आ, उ, १।४।१७) इति । गुणसङ्गाद्धेतो यदा नात्मनोऽभिव्यक्तिस्तदा क्रियात्मकरजोगुणोद्भवोऽयं काम इति न काचित् क्षतिर्यदि नात्मा प्रयोजनमतिक्रम्येच्छेत् । अत आह श्रुतिरात्मनः सुस्थावस्थायाम् "एतावान् वै कामः नेच्छंश्चे"ति । "नातो भूयो विन्देत्" इति वचनन्तु जायापुत्रवित्तकर्म्मातिरिक्तं न किञ्चन कामस्य विषय इति सूचनाय, दुष्पूरत्वमस्यैतान्यधिकृत्यैव । "न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ॥" (मनु, २अ, ९४श्लो) इति न्यायात् भोगेनास्य वृद्धिः । वृद्धिरियं पुनरसुस्थावस्थेत्याह सुश्रुतमाचार्य्यः—"शरीरे जायते व्याधिः शरीरः

स विपद्यते। मानसो जायते व्याधिर्मानसन्तु विपद्यते॥ शीतोष्णे चैव वायुश्च गुणा राजन् शरीरजाः। तेषां गुणानां साम्यञ्च तदाहुः स्वस्थलक्षणम्॥ उष्णेन बाध्यते शीतं शीतेनोष्णञ्च बाध्यते। सत्त्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः॥ तेषां गुणानां साम्यञ्चेत्तदाहुः स्वस्थलक्षणम्। तेषामन्यतमोत्सेके विधानमुपादिश्यते॥ हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते। कश्चिद्दुःखे वर्त्तमानः सुखस्य स्मर्त्तुमिच्छति। कश्चित् सुखे वर्त्तमानो दुःखस्य स्मर्त्तुमिच्छति॥ स त्वं न दुःखी दुःखस्य न सुखी सुखस्य च। स्मर्त्तुमिच्छसि कौन्तेय किमन्यद्दुःखविभ्रमात्॥" (अ, प, १२अ, २—७श्लो) इति। अतः स्मरणमेव काममूलमिति तत्त्वम्; तेन च तस्य वृद्धिः। कामस्य स्वाभाविकत्वाद्दुष्परिहार्य्यत्वादिन्द्रियसंयमेन तं वशीकृत्य स्वविषये तस्य नियोग एव श्रेयानित्याह स स्वयं युधिष्ठिरम्—"तस्मात् त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः। धर्म्मं कुरु महाराज तत्र ते स भविष्यति॥" (अ, प, १३अ, २०श्लो) इति। दुष्परिहरत्वमस्य प्रदर्शनाय स कामगीताख्यगाथामभाषत। तद्यथा—"नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित्॥ यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम्। तस्य तस्मिन् प्रहरणे पुनः प्रादुर्भवाम्यहम्॥ यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः। जङ्गमेष्विव धर्म्मात्मा पुनः प्रादुर्भवाम्यहम्॥ यो मां प्रयतते हन्तुं वेदवेदाङ्गसाधनैः। स्थावरेष्विव धर्म्मात्मा तस्य प्रादुर्भवाम्यहम्॥ यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः। भावो भवामि तस्याहं स च मां नावबुध्यते॥ यो मां प्रयतते हन्तुं तपसा शंसितव्रतः। ततस्तपसि तस्याथ पुनः प्रादुर्भवाम्यहम्॥ यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः। तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च। अवध्यः सर्व्वभूतानामहमेकः सनातनः॥" (अ, प, १३अ, १३—१८श्लो) इति। तत्कथं वध्यत आचार्य्येण "प्रजहि ह्येनं ज्ञानविज्ञाननाशनम्" (३।४१) इति। कामत्याग एव तस्य हननं, यथा तत्रैव,—"कामात्मानं न प्रशंसन्ति लोके नेहाकामा काचिदस्ति